# अलङ्कारसूत्रम्

राजकीय संस्कृतविद्यालयाध्यापक
महामहोपाध्याय
श्रीचन्द्रकान्त तर्कालङ्कार भट्टाचार्य्येण
प्रणीतम्

# ALANKÁRASUTRAM.

OR THE RULES OF RHETORIC.

BY

MAHÁMAHOPÁDHÁYA
CHANDRA KANTA TARKALANKARA
PROFESSOR, SANSKRIT COLLEGE, CALCUTTA.

PRINTED BY UPENDRA NÁTH CHÁKRAVARTÍ
AT THE SANSKRIT PRESS,
No 62, AMHERST STREET, CALCUTTA.
1899.

वृत्तिञ्च विरच्य तदुदाहरणं प्रादर्शि। अपेक्षितो विचारोऽपि संक्षेपेण दर्शितः। बहुत्र काव्यप्रकाशोदाहरणानां मनोहरतया तान्येवोद्धृतानि। ग्रन्थान्तरेभ्योऽपि संगृहीतान्युदाहरणानि। कतिचिदभिनवान्यपि रचितानि। पूर्व्वैरनुपदर्शिताः कतिचिदभिनवा अप्यलङ्काराः समुद्भाविताः। तदौचित्यानौचित्ययोर्विद्वांसः प्रमाणमित्यलं पल्लवितेन।

| | |
|---|---|
| कलिकातामहानगर्य्यां | सेरपुर नगर वास्तव्यः |
| शाकाः १८२१। फाल्गुनेमासि | श्रीचन्द्रकान्त देवशर्म्मा। |

---

# शुद्धिपत्रम्।



| अशुद्धम् | शुद्धम् | पृष्ठायां | पङ्क्तौ। |
|---|---|---|---|
| कथोङ्गत | कथोद्भूत | ३० | १० |
| न्यन | न्यून | ३० | २० |
| षब्धि | षुब्धि | ३८ | २१ |
| वाचो | वचो | ३९ | २ |
| तथा | तया | ५१ | १४ |
| वन्नुविधत्त | वन्नुविधत्ते | ५२ | १ |
| मित्यग्रा | मिथ्या | ५९ | ८ |
| दिवातिर्य | दिवानिर्य | ५९ | १५ |
| वैदर्मी | वैदर्भी | ५९ | १७ |
| रुतिः | रुचिः | ७१ | ४ |
| तत्पः | तत्परः | ७१ | १२ |
| मेताम्य | मेताम्यु | ७५ | ४ |
| गतेयति | गतेति | ७५ | १७ |
| हृतौ | हृत्तौ | ७७ | १ |
| उपमेयो | उपमेयो | ८५ | १० |
| कस्यति | कस्यचि | ८७ | ७ |
| पपानत्व | पमानत्व | | |
| तिदर्शनाया | निदर्शनाया | ९४ | ११ |
| स्तुत्रापि | अत्रापि | ९५ | २२ |
| स्तयते | स्तूयते | १०१ | ५ |
| विरुद्यते | विरुध्यते | १०२ | १२ |
| नतिक्रामा | नतिक्रमा | १०६ | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठायां | पङ्क्तौ । |
|---|---|---|---|
| कस्तुरी | कस्तूरी | ११० | ५ |
| सन्दोहो | सन्देहो | १११ | १२ |
| यया | यथा | ११२ | २ |
| प्रया | प्राया | ११२ | ८ |
| निःशब्द् | निशब्द् | ११४ | ४ |
| उन्मषं | उन्मेषं | ११५ | १ |
| रपेचितो | रूपेचितो | ११५ | ७ |
| सुतप्रचा | सुतप्रेचा | ११७ | १५ |
| रुगुरो | रुत्तरो | ११८ | ८ |
| वक्तेण | वक्तेण | १२५ | ३ |
| मना | मनसा | १२६ | २ |
| विस्फुर्ज्जसे | विस्फूर्ज्जसे | १३१ | १७ |
| न छाया | न च्छाया | १३२ | ७ |
| भचेतसं | मचेतसं | १३३ | १२ |
| क्रतपराधे | क्रतापराधे | १३६ | ३ |
| संक्षेपणा | संक्षेपेण | १३६ | १३ |
| छिन्न | च्छिन्न | १४४ | १३ |
| पाययप्रस्न | पायप्रस्न | १५१ | ७ |
| पमेययौ | पमेयौ | १५५ | १६ |
| वाशङ्केत | विशङ्केत | १५६ | ६ |
| मोहामोहे | महामोहे | १५६ | २१ |
| यदा | तदा | १६४ | ८ |
| यया | यथा | १६४ | १५ |
| णिन्यिरे | णिन्यिरे | १६६ | २१ |
| पाणिना | पाणिनिना | १६७ | ३ |
| नुप्रासस: | नुप्रास: | १७३ | १ |
| हणा | हणे | १७५ | २ |

| अशुद्धम्। | शुद्धम् | पृष्ठायां | पङ्क्तौ। |
|---|---|---|---|
| प्रौतये | प्रीतये | १७५ | १२ |
| स्तुवि | स्तुति | १७५ | १३ |
| मेंघ | मेव | १७५ | १४ |
| मावस्था | भावस्था | १७६ | १२ |
| दृतं | द्रुतं | १८० | १४ |
| तदत | तद्देत | १८० | १८ |
| ग्रषलक्ष्मणो | वृषलक्ष्मणो | १८५ | १ |
| तड़िता | ताड़िता | १८५ | ४ |
| मिद्यते | भिद्यते | १८७ | १७ |
| न्यन्यम् | न्योन्यम् | १८८ | १५ |
| मासिकां | मालिकां | १९० | १८ |
| च्चमर्त्ये | च्चमर्त्यै | १९१ | २१ |
| चोपापा | चोपा | १९३ | १९ |
| क्रियतो | क्रिययो | १९८ | १२ |
| दुद्मना | छद्मना | २०५ | ९ |
| नामना | शयना | २०५ | १५ |
| निवत्तने | निवर्त्तने | २०६ | १ |
| न्यन्यर्थानि | न्यन्यार्थानि | २०६ | ५ |
| हन्त | हस्त | २०६ | १९ |
| पच | एव | २०७ | २० |
| चिरन्नत | चिरन्तन | २१० | ८ |
| पलाति | पलानि | २१० | १६ |
| भाष्टणु | माष्टणु | २११ | ६ |
| रितयो | रित्येतयोः | २१३ | २१ |
| सुभाला | सुभयाल | २१५ | १ |
| मुर्ज्जखि | मूर्ज्जखि | २१७ | १० |
| ष्वर्ज्जखि | ऊर्ज्जखि | २१७ | १२ |

| अशुद्धम् | शुद्धम् | पृष्ठायां | पङ्क्तौ । |
| --- | --- | --- | --- |
| नभिव्याप्नवन्ति | नभिव्याप्नुवन्ति | २२० | ११ |
| न्नराान्यासौ | न्नरन्यासौ | २२१ | ११ |
| मुक्ताफलानां | गुञ्जाफलानां | २२२ | १२ |
| र्माभिः | र्भाभिः | २२२ | १५ |
| तस्ततः | स्ततः | २३१ | १७ |
| सादिषु | प्रासादिषु | २३३ | २ |
| निस्त्रिंशजे | निस्त्रंसजे | २३४ | १० |
| न्यस्त | वक्त्र | २३४ | ४ |
| मिधानम् | भिधानम् | २३६ | ८ |
| स्त्रिक्रियते | स्वीक्रियते | २३६ | १७ |
| च्छुकरः | च्छूकरः | २४० | २० |
| कञ्जुक्रं | कञ्चुकं | २४५ | २१ |
| निरूच्या | निरुच्या | २४८ | ७ |
| त्यक्ता | त्यक्त्वा | २५१ | ७ |
| चवती | चरती | २५२ | १४ |
| द्दिक् | धिक् | २५६ | ८ |
| भिधत्ते | मभिधत्ते | २५६ | १३ |
| किं | ततः किं | २६१ | २१ |
| भिन | भिन्न | २६३ | ५ |
| वाताह्वर | वाताहार | २६३ | १५ |
| स्वयश्च परामें | स्वयञ्च परामर्शे | २६७ | ६ |
| ति | मति | २७१ | ६ |

# अलङ्कारसूत्रम्

## प्रथमः परिच्छेदः ।

( काव्यनिरूपणम् । )

**अथातोबालव्युत्पत्त्यर्थं समासतः
काव्यं व्याख्यास्यामः ॥ १**

अथात इत्ययं निपातः शास्त्रारम्भावद्योतकः शास्त्रादावार्षेषु ग्रन्थेषु पठ्यते। तदनुसारतोलोकेऽपि प्रयुज्यते। अथवा। अथेत्यानन्तर्य्यमभिधत्ते श्रुत्या च मङ्गलप्रयोजनं भवति। काव्यतत्त्वज्ञभुत्मवस्तावदुपासदन्नन्तेवासिनोबालाः, अथानन्तरमित्यर्थः।

अतःशब्दो हेत्वर्थः। यस्मात् काव्यं महते कल्याणाय सम्पद्यते, अत एतस्मात् कारणात्, बालानां व्युत्पत्त्यर्थं संक्षेपेण काव्यं व्याख्यास्यामो विशेषेण लक्षणादिना सम्यक् कथयिष्यामः। एतेनाभिधेयप्रयोजनसम्बन्धा अपि प्रदर्शिताः। तत्र काव्यमभिधेयम्। बालव्युत्पत्तिः प्रयोजनम्। प्रतिपाद्यप्रतिपादकभावलक्षणः संबन्धः। आदौ तावल्लक्षणमुच्यते।

## सहृदयश्लाघ्यौ शब्दार्थौ काव्यम् ॥ २

सहृदयैः श्लाघ्यते यः शब्दोऽर्थश्च तदुभयं मिलितं काव्यम् । श्लाघनीयता च रसादिमत्त्वेन ।

## सुखोपदेशादिः प्रयोजनम् ॥ ३

सुकुमारमतीनामपि विनेयानां गुड़जिह्विकान्यायेनाभिमुखीकृत्यानायासेन रामादिवत्प्रवर्त्तितव्यं न रावणादिवदित्येवमादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशः काव्यस्य प्रयोजनम् । अभीप्सितत्वादस्य सुखशब्देनोपादानम् । यशःप्रभृत्युपसंग्रहार्थमादिपदम् । यदाहुः ।

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥

## प्रतिभादिभिस्तन्निष्पत्तिः ॥ ४

नवनवोन्मेषशालिनी प्रज्ञा प्रतिभा । प्रतिभादिभिः कारणकलापैस्तस्य काव्यस्य निष्पत्तिर्भवति । न तु केवलया प्रतिभया केवलेन वाऽन्येन । आदिशब्दोनैपुण्यादिपरिग्रहार्थः ।

## प्रयत्नाभिनिवेशाच्च ॥ ५

प्रयत्नेन योऽयमभिनिवेशः, तस्माच्च काव्यस्य निष्पत्तिर्भवति । एतदुक्तं भवति । यद्यपि प्रतिभादिकं न विद्यते, तथापि प्रयत्नातिशयेन वाचमुपासीनस्य कियत्यपि काव्यनिष्पत्तिर्भवतीति । यदाहुः.

न विद्यते यद्यपि पूर्ववासना
गुणानुबन्धिप्रतिभानमद्भुतम् ।
तथापि यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम् ॥

## गुणालङ्कारविशेषात्तदुपादेयताविशेषः ॥ ६

गुणालङ्काराणां विशेषात्तारतम्यात् तस्य काव्यस्योपादेयताविशेषोभवति ।

## दोषविशेषाद्धेयताविशेषः ॥ ७

काव्यस्येत्यर्थः । एतदुक्तं भवति । यथा यथा गुणालङ्कारा विशिष्यन्ते तथा तथा काव्यमुपादीयते, यथा यथा च दोषा विशिष्यन्ते तथा तथा हीयते इति ।

इत्यलङ्कारसूत्रे काव्यनिरूपणाधिकरणे प्रथमः ।

---

# द्वितीयः परिच्छेदः ।

( शब्दार्थनिरूपणम् । )

प्रसङ्गात् शब्दार्थौ विभजते ।

**अभिधालक्षणाव्यञ्जनाभिरर्थाववोधकाः**
**वाचकलाक्षणिकव्यञ्जकाः शब्दाः ॥ १**

शब्दस्तावत् त्रिविधोवाचकोलाक्षणिको व्यञ्जकश्चेति । तत्राभिधयाऽर्थाववोधकः शब्दोवाचकः, लक्षणयाऽर्थाववोधकः शब्दोलाक्षणिकः, व्यञ्जनयाऽर्थाववोधकः शब्दोव्यञ्जकः ।

**एतेनार्थोव्याख्यातः ॥ २**

एतेन शब्दव्याख्यानेनार्थोऽपि व्याख्यातो वेदितव्यः । अभिधया प्रतिपाद्यमानोऽर्थोऽभिधेयोवाच्यश्चोच्यते । लक्षणया प्रति-प्रतिपाद्यमानोऽर्थो लक्ष्यः । व्यञ्जनया प्रतिपाद्यमानोऽर्थो व्यङ्ग्यः ।

**शब्दस्यार्थे मुख्या शक्तिरभिधा ॥ ३**

न खलु कश्चित् संवन्धमन्तरेण शब्दविशेषादर्थविशेषप्रतिपत्तिनियम उपपद्यते, न चापरः कश्चन संयोगादिरूपः संवन्धोऽत्र विद्यते । तस्मात् शब्दगतः शक्तिविशेषएव तादृशो यत् कश्चित् शब्दः कश्चिदेवार्थं प्रतिपादयति न सर्व्वः सर्व्वमित्यवश्यमभ्युपगन्तव्यम् । सएव शब्दार्थयोः संवन्धः । तत्र या शब्दस्यार्थे मुख्या

शक्तिः, सेयमभिधेत्युच्यते। अतएव तया प्रतिपाद्यमानोऽर्थो मुख्यार्थ इति गीयते। सेयं शक्तिः शब्दगतः कश्चन धर्म्मएव न त्वियमीश्वरेच्छा। ईश्वरमजानतोऽनङ्गीकुर्व्वतश्च शब्दादर्थप्रतिपत्तिदर्शनात्। ज्ञाता खल्वियमर्थावबोधहेतुर्न स्वरूपसतीत्यन्यदेतत्।

## मुख्यार्थबाधतद्योगरूढ़िप्रयोजनसव्यपेक्षा लक्षणा॥ ४

योगः संबन्धः। रूढ़िः प्रसिद्धिः। मुख्यार्थस्य बाधोमुख्यार्थयोगोरूढ़िप्रयोजनयोरन्यतरच्चेत्येतत्त्रितयसव्यपेक्षा या शब्दस्यार्थे शक्तिः, सा लक्षणेत्युच्यते। क्रमेणोदाहरणम्।

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान्।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः॥

अत्र वङ्गशब्दस्य तद्देशीयक्षत्रियेषु लक्षणा। तथा प्रसिद्धिरेव तत्र मूलम्। अतएव नास्त्यत्र प्रयोजनापेक्षा। सेयं रूढ़िमूलेत्युच्यते।

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।
उरोमुकुलितस्तनं जघनमंसबन्धोद्धुरं
वतेन्दुवदनातनौ तरुणिमोद्गमोमोदते॥

अत्र विकाशस्य पुष्पधर्म्मत्वात् स्मिते च तद्बाधात् विकसितपदस्य विजृम्भमाणे लक्षणा। प्रयोजनन्तु मुखस्य पुष्पतुल्यसौरभादिमत्त्वावगतिः। तन्मूलैवेयं लक्षणा। अतएव प्रयोजनमूलेत्युच्यते। एवमन्यत्रापि।

सेयं लक्षणा गौणी शुद्धा चेति द्विविधा। तत्र, सादृश्यमूला लक्षणा गौणीत्युच्यते। यथा गौर्वाहीकः सिंहोमाणवक-इत्यादिः। अभिधेयार्थगुणयोगात् खल्वियं प्रवर्त्तते। विपरीता शुद्धा। इयमपुरपादानलक्षणा लक्षणलक्षणा चेति द्विधा भिद्यते। श्वेतोधावतीत्यादौ श्वेतादिकमुपादायैव तद्वति श्वेतादिपदानां लक्षणेतुरपादानलक्षणेयम्। इयमेवाजहत्स्वार्थेतुरच्यते। एत-द्विपरीता तु लक्षणलक्षणा। यथा गङ्गायां घोष इत्यादौ। अत्र हि गङ्गादिशब्दः स्वार्थमशेषतः परित्यज्यार्थान्तरमव-बोधयति। एषैव जहत्स्वार्थेत्याख्यायते। एवं, गौर्वाहीक-इत्यादौ स्वशब्दनिर्दिष्टयोर्द्वयोः सामानाधिकरण्यबलादुयत्राभेदाव-गतिस्तत्र गौणी सारोपा भवति। आयुर्घृतमित्यादौ शुद्धा सारोपा। गौरयमायुरिदमित्यादौ त्वेकस्य स्वशब्दनिर्देशाभावे त्वारोपस्योत्कटत्वात् यथाक्रमं गौणी साध्यवसाना शुद्धा साध्यवसाना चेत्याचक्षते। कैश्चिदत्र बहवो भेदाः प्रदर्शिताः। अनतिप्रयोजनत्वात्तु नेह व्युत्पादिताः।

## अभिधादिवच्छब्दार्थशक्तिविशेषो व्यञ्जना ॥ ५

शब्दार्थयोः संबन्धमन्तरेण शब्दादर्थप्रतीतेरयोगात् अन्यस्य च कस्यचित् सम्बन्धस्यासम्भवात् यथाऽभिधालक्षणारूपः कश्चन शब्दशक्तिविशेषः शब्दार्थयोः संबन्धतयाऽभ्युपगम्यते सर्व्वैः शब्द-व्यवहारिभिः। तथैवाभिधेयाद्यर्थावबोधोत्तरकालं प्रतीयमानस्यार्थ-स्याभिधालक्षणाभ्यां बोधासम्भवात् असम्बद्धस्य च बोधायोगात् तयोः संबन्धरूपः कश्चन शक्तिविशेषः प्रतीतिशरणैरवश्यमभ्युप-

गन्तव्यः*। स खल्वयं शक्तिविशेषो व्यञ्जनध्वननप्रत्यायनादिशब्द-व्यपदेश्यः सकलसहृदयसंवादसमनुगतः स्वस्यापि बोधपदवीमवतरन् स्वानुभवमनपलपता न शक्यते प्रत्याख्यातुम्। इयान् परं विशेषः। अभिधालक्षणे केवलं शब्दाश्रये इयन्तु शब्दार्थाश्रयेति। क्रमेणोदाहरणम्।

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत्॥

अत्र प्रकरणादभिधाया नियन्त्रितत्वेऽप्युत्तरकालं प्रतीतिपथमवतरदर्थान्तरं व्यञ्जनाव्यापारतां प्रतिपद्यते। सेयमभिधामूला शाब्दी व्यञ्जना। नियन्त्रितायामप्यभिधायां तद्गोचरस्यैवार्थान्तरस्योत्तरकालं प्रतीयमानत्वात्। मुखं विकसितस्मितमित्यादौ तु लक्षणामूला। सेयं द्विविधा भवति शाब्दी व्यञ्जना, अभिधामूला लक्षणामूला चेति। आर्थी खल्वपि।

कस्य वा न भवति रोषो
दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्रायिणि,
वारितवामे, सहस्वेदानीम्॥

अत्र भ्रमरेणास्या अधरो दष्ट इति प्रतीयते।

इत्यलङ्कारसूत्रे शब्दार्थनिरूपणपरिच्छेदः द्वितीयः।

---

## तृतीयः परिच्छेदः ।

( रसनिरूपणम् ) ।

अलवणं भोज्यमिव नीरसं काव्यं सहृदयेभ्यो न स्वदते इति यतः शब्दार्थयोः श्लाघनीयता तं रसमिदानीं संक्षेपतो-निरूपयति ।

**विभावानुभावसञ्चारिभिरास्वाद्यमानः**
**स्थायी रसः ॥ १**

मिलितैर्व्विभावादिभिरास्वाद्यमानः स्थायी भावोरस इत्युच्यते । आस्वादश्च चर्व्वणापरपर्यायो रसादभिन्नोभिन्नो-वेत्यन्यदेतत् । स खल्वयं रसोऽलौकिकः कश्चन पदार्थः सहृदय-धुरीणैरनुभूयमानो न शक्योऽपलपितुम् । विभावादीनामिकैक-मात्रस्योपवर्णनेऽपि झटित्यन्यसमाक्षेपे सत्यास्वाद्यमानता न विरुध्यते स्थायिनः । यथा,

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थणाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥

अत्रानुभावमात्रोक्तावपि प्रकरणवशात् झटिति विभाव-सञ्चारिणामाक्षेपादास्वादो न विरुध्यते । एवमन्यत्राप्यनु-सन्धेयम् । अन्यसमाक्षेपस्य त्वनुपपत्तौ न निष्पद्यतएव रसः ।

## आलम्बनोद्दीपनौ विभावौ ॥ २

यमालम्ब्य रसः प्रादुर्भवति, स आलम्बनविभावः। यस्तु प्रादुर्भवन्तं रसमुद्दीपयति, स देशकालभेदादिरुद्दीपनविभावः।

## कार्य्याण्यनुभावाः ॥ ३

यानि किल भावभावितचेतसां कार्य्याणि कटाक्षविक्षेपादीनि तान्यनुभावाः। सात्त्विका अपि सत्त्वमात्रोद्भवा अनुभावा एवेति नेह पृथगुच्यन्ते। ते च—

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः॥

इति चिरन्तनैरुक्ताः।

## समुद्रतरङ्गवत् स्थायिन्युन्मग्ननिमग्ना निर्व्वेदादयः सञ्चारिणः ॥ ४

यथा समुद्रे तरङ्गा उन्मज्जन्ति निमज्जन्ति च, तथा स्थायिन्युन्मग्ना निमग्नाश्च निर्वेदादयः सञ्चारिण इत्युच्यन्ते। ते खल्वमी व्यभिचाराद्विशेषेणाभिमुख्येन चरणाद्वा व्यभिचारिण इत्यपि कथ्यन्ते। निर्वेदादयश्च धनिकेनोक्ताः।

निर्वेदग्लानिशङ्काश्रमधृतिजड़ताहर्षदैन्यौग्र्यचिन्ता-
स्त्रासेर्ष्यामर्षगर्व्वाः स्मृतिमरणमदाः सुप्तनिद्राविबोधाः।
व्रीड़ापस्मारमोहाः समतिरलसताऽऽवेगतर्कावहित्था-
व्याध्युन्मादौ विषादोत्सुकचपलयुतास्त्रिंशदेतास्त्रयश्च॥

## नियता रत्यादयः स्थायिनः ॥ ५

ये खल्वव्यभिचारमवतिष्ठन्ते, ते रत्यादयः स्थायिनः । ते च,

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा ।

जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च ॥

इति दर्शिताः ।

## अनुरक्तयोः प्रमोदो रतिरित्येके ॥ ६

परस्परमनुरक्तयोर्यः प्रमोदः सैव रतिरित्येके मन्यन्ते ।

## प्रेमार्द्रतेत्यपरे ॥ ७

अभिमते वस्तुनि मनसः प्रेमार्द्रभावो रतिरित्यपरे मन्यन्ते ।

## षड्विधो हासः ॥ ८

हासस्तु षड्विधो भवति । यदाहुः ।

स्मितमिह विकाशिनयनं, किञ्चिल्लक्ष्यद्विजन्तु हसितं स्यात् ।
मधुरस्वरं विहसितं, सशिरःकम्पमिदमुपहसितम् ।
अपहसितं सास्राक्षं, विक्षिप्ताङ्गं भवत्यतिहसितम् ।
द्वे द्वे हसिते चैषां ज्येष्ठे मध्येऽधमे क्रमशः ।

उत्तमस्य स्मितहसिते, मध्यमस्य विहसितोपहसिते, अधमस्यापहसितातिहसिते इत्यर्थः ।

## अन्ये प्रसिद्धाः ॥ ९

अन्ये शोकादयः प्रसिद्धा इति नेह व्युत्पाद्यन्ते ।

स्नेहोऽप्येकेषाम्॥ १०

एकेषां मते स्नेहोऽपि स्थायिभावो भवति।

भावनाद्भावाः स्थायिसञ्चारिणः॥ ११

स्थायिनः सञ्चारिणश्च भावनात् भावकचेतसोवासनात् भावा इत्युच्यन्ते।

शृङ्गारादयोरसाः॥ १२

अत्रायं संग्रहश्लोकः।

शृङ्गारो हास्यकरुणौ रौद्रवीरभयानकाः।
बीभत्सश्चाद्भुतश्चैव शान्तश्चेति रसा नव॥

स्थायिनो यथासंख्यं शृङ्गारादिषु॥ १३

शृङ्गारादिषु रसेषु रत्यादयः स्थायिभावा यथासंख्यं भवन्ति। शृङ्गारे रतिः, हास्ये हासः, करुणे शोकः इत्येवमादयः।

अनुभावाः प्रसिद्धाः॥ १४

शृङ्गारादिषु रसेषु लोकप्रसिद्धा अनुभावा बोद्धव्याः। शृङ्गारे कटाक्षविक्षेपादयः, हास्ये नेत्रसङ्कोचस्मेरतादयः, करुणे क्रन्दनदैवनिन्दादयः। एवमन्यत्रापूह्यम्।

सञ्चारिणो यथासम्भवं सर्व्वत्र ॥ १५

सर्व्वेष्वेव रसेषु यत्र यावन्तः सम्भवन्ति, तत्र तावन्तः सञ्चारिणो भावा ज्ञेयाः ।

नायकावालम्बनं चन्द्रादयश्चोद्दीपनान्याद्ये ॥ १६

आद्ये शृङ्गारे नायकावालम्बनविभावौ, चन्द्रादयश्चोद्दीपनविभावाः । नायकश्च नायिका च नायकौ । नायिकारतौ नायको नायकरतौ नायिका आलम्बनमित्यर्थः ।

धीराश्चोदात्तोद्धतललितप्रशान्तभेदाच्चतुर्विधा-नायकाः ॥ १७

उदात्तादिभेदान्नायकाश्चतुर्व्विधा भवन्ति । ते च सर्व्वएव धीरा बोद्धव्याः । एतदुक्तं भवति । सर्व्वएवामी नायका धीरा-भवन्ति । ते चोदात्तादिभेदात् चतुर्धा भिद्यन्ते । धीरोदात्तो-धीरोद्धतोधीरललितोधीरप्रशान्तश्चेति । ते च युधिष्ठिरादयो-भीमसेनादयो वत्सराजादयश्चारुदत्तादयश्च ।

भूयश्चानुकूलदक्षिणशठधृष्टाः ॥ १८

पुनश्च नायकाश्चतुर्धा भिद्यन्ते, अनुकूलो दक्षिणः शठो धृष्टश्चेति । तत्रैकस्यैवानुरक्तोऽनुकूलः । अनेकत्र समरागो दक्षिणः । प्रियवादी गूढविप्रियकारी शठः । निर्लज्जो धृष्टः । पृथगेव खल्वमी भेदा बोद्धव्याः, न पुनर्धीरोदात्तादीनां शृङ्गारिणां

प्रत्येकमिमे भेदा मन्तव्याः। न खलु धीरोदात्तस्य शठत्वं धृष्टत्वं वा सम्भवति, सम्भवे वा धीरोदात्तत्वं भवितुमर्हति। परस्पर-विरोधिनो ह्येते। न जात्वमीषां सह सम्भवोऽस्ति।

## पीठमर्द्दविटविदूषकाः सहायाः ॥ १९

पीठमर्दादयो नायकानां सहाया भवन्ति। तत्र नायकगुण-वान् तदनुचरः पीठमर्द्दः। विद्यैकदेशशाली विटः। विदूषकः प्रसिद्धः। तदुक्तं रुद्रटेन।

त्रिविधः स, पीठमर्द्दः प्रथमोऽथ विटो विदूषकस्तदनु।
नायकगुणयुक्तोऽथ च तदनुचरः पीठमर्द्दोऽत्र ॥
विट एकदेशविद्यो विदूषकः क्रीड़नीयकप्रायः।
निजगुणयुक्तो मूर्खो हासकराकारवेशवचाः ॥

## अवरोधे शकारादय एकेषाम् ॥ २०

एकेषां मते अवरोधे अन्तःपुरे शकारादयः सहाया भवन्ति नायकस्य। शकारो राज्ञोऽनूढ़ाभ्राता मृच्छकटिकादौ प्रसिद्धः। आदिशब्दात् नायिकासख्यादीनामप्युपसंग्रहो मन्तव्यः।

## स्वीया परकीया सामान्या चेति नायिका ॥ २१

नायिका स्वीयादिभेदात् त्रिविधा भवति। पाणिगृहीतिका स्वीया। कन्यका परकीया। पण्यस्त्री सामान्या।

## मुग्धा मध्या प्रगल्भा च ॥ २२

भूयश्च नायिका त्रिविधा मुग्धा मध्या प्रगल्भा चेति। तत्र अधिकव्रीड़ा मुग्धा, मध्यमव्रीड़ा मध्या, अव्रीड़ा प्रगल्भा। मानमृदुत्वादीनि त्वासां कार्य्याणि। व्रीड़ाधिक्यादावौचित्येन तदुपपत्तेः। पृथक् चैते भेदा मन्तव्याः, सर्व्वासामेव नायिकानां यथासम्भवममीषां भेदानां सम्भवात्। न खलु परकीया मुग्धा मध्या प्रगल्भा वा न सम्भवति। न वा सामान्या मध्या प्रगल्भा वेति। प्रथमावतीर्णयौवनादयस्तु सर्व्वास्वप्यविशिष्टाः। धीरात्वमधीरात्वं धीराधीरात्वञ्चामूषां धैर्य्यतारतम्यादिकृतं यथासम्भवमुन्नयम्।

## स्वाधीनपतिकाऽभिसारिका खण्डिता चाऽवस्थाभेदात् ॥ २३

अवस्थाभेदात् पुनर्नायिका त्रिविधा भवति, स्वाधीनपतिका अभिसारिका खण्डिता चेति। स्वाधीनपतिकाया लक्षणापेक्षाऽभावादभिसारिकाया लक्षणमाह—

## अभिसरत्यभिसारयते वाऽभिसारिका ॥ २४

या किल स्वयं कान्तं प्रत्यभिसरति, कान्तं वा स्वां प्रत्यभिसारयते दूत्यादिभिः सेयं द्विविधा भवत्यभिसारिका। तत्र स्वीया परकीया च निगूढ़मेवाभिसरत्यभिसारयते वा, सामान्या-त्वलङ्कारझणत्कारादिभिर्व्यक्तमित्यन्यदेतत्।

कुतोऽपि खण्डितप्रेमा खण्डिता ॥ २५ ॥

कुतोऽपि कारणात् स्त्र्यन्तरासङ्गाद्वा कार्य्यान्तरव्यासङ्गाद्वा अन्यस्माद्वा कस्माच्चित् कारणात् खण्डितं प्रेम यस्याः सेयं खण्डितेत्युच्यते ।

विप्रलब्धा कलहान्तरिता प्रोषितपतिका च खण्डितया व्याख्याता ॥ २६ ॥

वेदितव्या इति शेषः । खण्डितायामेव तासामन्तर्भाव इत्यर्थः । तत्र कृतसङ्केता वञ्चिता विप्रलब्धा । आगस्करणात् प्रत्याख्यातप्रिया पश्चात्तापदूना कलहान्तरिता । प्रियानागमनदुःखार्त्ता विरहोत्कण्ठिता तु विप्रलब्धैव । कयाचिद्विवक्षया चिरन्तनैः पृथक् परिगणिता । एवं वासवेश्मनि प्रियसमागमाशया कृतनेपथ्या प्रियसमागममलभमाना वासकसज्जाऽपि वस्तुतो विप्रलब्धाया नातिरिच्यते । प्रोषितपतिकाया अपि खण्डितायामन्तर्भावो विभावनीयः ।

भावादयस्त्वनुभावाः ॥ २७ ॥

ये किल भावादयः स्त्रीणामलङ्कारास्ते त्वनुभावविशेषा एव न ततोऽतिरिच्यन्ते । तेषां संग्राहकाः श्लोकाः ।

भावहावौ तथा लीला हेला विब्बोक एव च ।
मोट्टायितं कुट्टमितं विलासः किलकिञ्चितम् ॥
विक्षेपो विहृतं केलिर्ललितं विभ्रमोमदः ।
कुतूहलञ्च तपनं हसितं चकितं तथा ॥

अवहित्था तथा मौग्ध्यमनुभावा इमे मताः ।
शोभादयस्त्वलङ्कारा न भजन्त्यनुभावताम् ॥

तत्र निर्व्विकारस्य चेतसः प्रथमो विकारो भावः । स एवेषदुन्नीयमानो हावः । विस्पष्टमुपलक्ष्यमाणः स एव हेला । प्रियस्यानुकरणं लीला । अनादरो विब्बोकः । तद्भावभावितचेतसोऽङ्गभङ्गहास्यादिकं मोट्टायितम् । हर्षेऽपि करविधूननादिकं कुट्टमितम् । इष्टदर्शनादिसमुद्भूतचेष्टाविशेषो विलासः । स्मितरुदितादिसंप्लवः किलकिञ्चितम् । रहस्याख्यानादयो विक्षेपाः । वक्तव्यकालेऽप्यवचनं विहृतम् । प्रियेण क्रीड़ा केलिः । अलौकिकाङ्गविन्यासो ललितम् । तद्भावभावितचेतसोऽस्थाने भूषणादिन्यासो विभ्रमः । सौभाग्याद्यवलेपजो विकारोमदः । रम्यवस्तुसन्दर्शनौत्सुक्यं कुतूहलम् । इष्टवियुक्तायाश्चेष्टा तपनम् । वृथाहासो हसितम् । भयसम्भ्रमश्चकितम् । विज्ञातस्याप्यविज्ञातस्येव पृच्छा मौग्ध्यम् । आकारगोपनमवहित्था ।

ते खल्विमे यथासम्भवं सम्भोगविप्रलम्भयोरनुभावा भवन्ति । तत्र केचिन्मुग्धायाः केचिन्मध्यायाः केचित् प्रगल्भायाः केचित् सर्व्वासामेवेत्यादिकमूहनीयम् । केचित् पुंसामपि भवन्तो-भावादयः वीरादावप्यनुभावरूपतां भजन्ते ।

दूतादयः प्रसिद्धाः ॥ २८ ॥

दूताः दूत्यः सख्यश्च लोकप्रसिद्धा एवावगन्तव्याः । न खत्र लक्षणापेक्षाऽस्ति ।

*स द्विविधः सम्भोगविप्रलम्भभेदात् ॥ २९

स इति प्रथमोद्दिष्टं शृङ्गारमाचष्टे। शृङ्गारो द्विविधो भवति सम्भोगो विप्रलम्भश्च। तत्र

अवियोगः सम्भोगः ॥ ३०

द्वयोरवियोगः सम्भोगः। अवियोगपदेनात्र तत्कार्य्यतया दर्शनादिकमभिप्रेयते। तदुक्तं रुद्रटेन।

अन्योन्यस्य सचित्तावनुभवतो नायकौ यदिद्धमुदौ।

आलोकनवचनादि, स सर्व्वः सम्भोगशृङ्गारः।

उदाहरणम्।

नो वेत्ति प्रणयानुबन्धरचनां वाचां तथा माधुरीं
नेत्रोपान्तविलोकनञ्च मधुरं भङ्गीं मुखेन्दोरपि।
साक्षात् काममिव स्फुरन्तमसकृद्दृष्ट्वा युवानं पतिं
बाला केवलमुत्पलोपमरुचः स्निग्धा विधत्ते दृशः॥

विपरीतो विप्रलम्भः पूर्व्वरागमानप्रवासात्मकः ॥ ३१

सम्भोगविपरीतो वियोगरूपो विप्रलम्भः। स चायं त्रिविधः पूर्व्वरागो मानः प्रवासश्चेति। अत्र पूर्व्वरागादिकृतोविप्रलम्भः पूर्व्वरागादिशब्दैरुच्यते। कार्य्ये कारणोपचारात्। तत्र पूर्व्वं योऽयं परस्परमनुरागः, स एव पूर्व्वराग इत्युच्यते। तत्रादितः स्त्रियाः

पश्चात्तदिङ्गितैः पुंसोऽनुरागोवर्णनीयः। एवं खल्वधिकं हृदयङ्गमं भवति। पूर्वरागस्योदाहरणम्।

• आशंसापरिकल्पितेऽपि च मनो यत्रामृतैः प्लाव्यते
यल्लोभात् किल पूर्व्वदेवनिवहैः पीयूषमप्युज्झितम्।
तन्मुग्धेक्षणलक्षणं स्मितकथं भावार्द्रचेष्टोत्तरं
स्वर्गादप्यभिराममेणनयनाप्रेमाऽस्तु नित्यं मयि॥

मानस्य यथा।

यन्मिथ्यावचनेन कुप्यमितरां मह्यं तदेतत्तथा
तिष्ठेत् त्वं किल मत्प्रियाऽस्यभिमतं कृत्वा सुखं स्थीयताम्।
यन्मुक्ताफलसोदराश्रुनिकरैराप्लाव्यते त्वन्मुखं
मामेतद्दहति स्थिरोऽञ्जलिरयं मा निर्दये, रुद्यताम्॥

एतानि मम। प्रवासस्य यथा।

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्व्वे समं प्रस्थिता-
गन्तव्ये सति जीवित, प्रियसुहृत्सार्थः किमु त्यज्यते॥

शापहेतुकस्याप्यत्रैवान्तर्भावः। केचित् करुणात्मकं भेदान्तरमिच्छन्ति। द्वयोरेकस्मिन् लोकान्तरं गते कालान्तरलभ्ये सत्ययं भेदः प्रथते। यथा महाश्वेतापुण्डरीकयोरित्याहुः। स खल्वयं भेदो न चिरन्तनैः परिगणितः। प्रवासएव त्वन्तर्भवितुमर्हति। द्वयोर्भिन्नदेशत्वं हि प्रवासः। स च तत्राप्यस्तीति। मानस्त्वेकदेशयोरपि दृश्यते। यथा,

बाले, नाथ, विमुञ्च मानिनि, रुषं, रोषान्मया किं कृतं,
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्व्वेऽपराधा मयि।

तत् किं रोदिषि गद्गदेन वचसा, कस्याग्रतोरुद्यते,
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतोरुद्यते ॥

## दशावस्थाः ॥ ३२

अत्र शृङ्गारे दशावस्था भवन्ति। ताश्च नयनप्रीतिचिन्तासङ्गसङ्कल्पनिद्रापगमतनुताविषयनिवृत्तित्रपानाशोन्मादमूर्च्छामरणाख्या इत्येके। अभिलाषचिन्तास्मृतिगुणकीर्त्तनोद्वेगप्रलापोन्मादव्याधिजड़तामृतय इत्यपरे। मरणन्तु जातप्रायं वा चेतसा आकाङ्क्षितं वा पुनःप्रत्युज्जीवनं साक्षादपि वा वर्णनीयमित्यन्यदेतत्। अवस्थाश्चैता न पूर्व्वरागएवावतिष्ठन्ते। अन्यत्रापि दर्शनात्। दिङ्मात्रमुदाह्रियते।

सव्यापारामहनि न तथा पीड़येन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्व्विनोदां सखीं ते।
मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनिशयनां सौधवातायनस्थः ॥

## विकृतवाग्वेशादिस्तच्चेष्टाद्यालम्बनोद्दीपनविभावौ हास्ये ॥ ३३

हास्यरसे विकृतवाग्वेशादिरालम्बनविभावस्तच्चेष्टादिश्चोद्दीपनविभावः। उदाहरणम्।

आकुञ्च्य पाणिमशुचिं मम मूर्द्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे।

तारस्वरं प्रथितथूत्कमदात् प्रहारं
हाहा हतोऽहमिति रोदिति विष्णुशर्म्मा ॥

शोच्यतद्दाहाद्यो करुणे ॥ ३४

शोच्यमालम्बनविभावस्तद्दाहादिरुद्दीपनविभाव इत्यर्थः ।

उदाहरणम् ।

हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर—
श्चित्रस्थानपि रोदयन्ति शतधा कुर्व्वन्ति भित्तीरपि ॥

अरातितच्चेष्टाद्यौ रौद्रे ॥ ३५

अरातिरालम्बनविभावस्तच्चेष्टादिरुद्दीपनविभावः ।

उदाहरणम् ।

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः ॥

विजेतव्यादितच्चेष्टाद्यौ यथायोग्यं वीरे ॥ ३६

वीरे विजेतव्यादिरालम्बनविभावस्तच्चेष्टादिरुद्दीपनविभावः । यथायोग्यमित्यनेनेदमाह, यत्र वीरे यावालम्बनोद्दीपनविभावौ युज्येते, तावेव तत्र तौ प्रतिपत्तव्याविति । वीरस्तावच्चतुर्व्विधः,

युद्धवीरोधर्म्मवीरोदानवीरो दयावीरश्चेति। तत्र युद्धवीरे विजेतव्यतच्चेष्टाद्यौ, धर्म्मवीरे धर्म्मसाधनसत्त्वाद्यौ, दानवीरे सम्प्रदानादिसत्त्वाद्यौ, दयावीरे अनुकम्प्यतत्कातरोक्त्याद्यावालम्बनोद्दीपनविभावाववगन्तव्यौ। युद्धदानदयाभेदात् त्रिविधोवीर इति धनिकप्रभृतयः। रुद्रटस्त्वाह,

उत्साहात्मा वीरः स त्रेधा युद्धधर्म्मदानेषु।
विषयेषु भवति तस्मिन्नच्चोर्भो नायकः ख्यातः॥

युद्धवीरधर्म्मवीरौ द्वावेव त्वभ्युपगन्तुमुचितौ। दानवीरदयावीरयोर्धर्म्मवीराद्व्यतिरेकोपपत्तेः। युद्धं तु कस्याञ्चिदवस्थायां कस्यचिन्न भवति धर्म्म इति पृथगुपन्यासो युद्धवीरस्य। क्रमेणोदाहरणम्।

भो लङ्केश्वर, दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चित् कृतम्।
नैवं चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः॥

युद्धवीरस्य श्रीरामचन्द्रस्योक्तिरियम्। क्रोधानुभावरहितोह्युत्साहवान् युद्धवीरो भवति। यः पुनरुत्साहवानपि क्रोधानुभावैः प्रस्वेदरक्तवदननयनादिभिरुपचितो रौद्रएव स भवति न त्वसौ युद्धवीर इत्याहुः।

राज्यञ्च वसु देहश्च भार्य्या भ्रातृसुताश्च ये।
यच्च लोके ममायत्तं तद्धर्म्माय सदोद्यतम्॥

धर्म्मवीरस्य युधिष्ठिरस्योक्तिरियम्।

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा साऽपि वदन्तएव हि वयं रोमाञ्चिताः पश्यत।

विप्राय प्रतिपादयति किमपरं रामाय तस्मै नमो-
यस्मात् प्रादुरभूत् कथाद्भुतमिदं येनैव चास्तं गतम् ॥

सोऽयं परशुरामोदानवीरः ।

गिरामुखैः स्यन्दतएव रक्त-
मद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवापि तावत्
किं भक्षणात् त्वं विरतो गरुत्मन् ॥

दयावीरस्य जीमूतवाहनस्येयमुक्तिः ।

## भयहेतुतच्चेष्टादौ भयानके ॥ ३७

भयहेतुर्व्याघ्रादिरालम्बनविभावस्तच्चेष्टादिरुद्दीपनविभावः उदाहरणम् ।

नष्टं वर्षवरैर्मनुष्यगणनाऽभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्कया ॥

## अहृद्यातदतिशयकारिणौ बीभत्से ॥ ३८

इन्द्रियोद्वेजनाः पूतिगन्धादयो विषया अहृद्याः । ते तावदालम्बनविभावाः । ये त्वहृद्यमेव सन्तमतिशयेनाहृद्यं कुर्वन्ति, ते कृमिपातप्रभृतय उद्दीपनविभावाः । उदाहरणम् ।

प्रेतादुत्कृत्य कृत्तिं प्रकटितदशनैः खण्डखण्डानि मांसा-
न्यादायादाय जग्ध्वा स्तुतरसकृमियुक्पूतिगन्धीनि भूयः ।

मस्तिष्कं द्राक्करोटीचषकपरिगतं काममापीय पश्चा-
दाकृष्याकृष्य मज्जप्रचुरमिति मुहुश्चर्वयन्त्यास्थिसंघम् ॥

इदं मम। रम्याण्यपि रमणीस्तनजघनादीनि बीभत्सस्यान-स्यालम्बनतामुपयान्ति। यथा,—

लालां वक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ।
मांसास्थिकूटं जघनं जनः कामग्रहातुरः ॥

नायं शान्तो विरक्तः। बीभत्सस्तावद्धि विरज्यते, अथ शान्तोभवति। न तु शान्तो विरज्यते, विरक्तो वा बीभत्सते।

## अलौकिकतद्गुणाद्यावद्भुते ॥ ३९

यद्वस्तु लोकसीमानमतिक्रामति, तदालम्बनविभावः। तद्-गुणाद्यास्तूद्दीपनविभावाः। उदाहरणम्।

चित्रं महानेष बतावतारः
क्व कान्तिरेषाऽभिनवैव भङ्गिः।
लोकोत्तरं धैर्य्यमहो प्रभावः
काऽप्याकृतिर्नूतनएष सर्गः ॥

इयं किल भगवन्तं वामनमुद्दिश्य बलेरुक्तिः।

## निःसारताद्दिसत्सङ्गाद्यौ शान्ते ॥ ४०

संसारस्यासारता, परमात्मा वाऽलम्बनविभावः। सत्सङ्गादि-स्तूद्दीपनविभावः। उदाहरणम्।

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा।

तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः

क्वचित् पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः॥

केचिदेनं निर्व्वेदस्थायिभावमाहुः।

## पुत्रादितच्चेष्टाद्यो वत्सले॥ ४१

ये स्नेहं स्थायिभावमिच्छन्ति तन्मते वत्सलो नाम दशमो-रसो भवति। तत्र पुत्रादिरालम्बनविभावस्तच्चेष्टादयश्चोद्दीपन-विभावाः। उदाहरणम्।

यदाह धात्र्या प्रथमोदितं वचो-

ययौ तदीयामवलम्ब्य चाङ्गुलीम्।

अभूच्च नम्रः प्रणिपातशिक्षया

पितुर्मुदं तेन ततान सोऽर्भकः॥

अत्र विरहादयोऽप्यवस्था यथासम्भवमवगन्तव्याः। रुद्र-टस्त्विमं प्रेयांसं मन्यते। यदाह,

स्नेहप्रकृतिः प्रेयान् सङ्गतशीलार्य्यनायकोभवति।

स्नेहस्तु साहचर्य्यात् प्रकृतेरुपचारसंबन्धात्।

निर्व्याजमनोवृत्तिः मनस्विसद्भावपेशलालापाः।

अन्योन्यं प्रति सुहृदोर्व्यवहारोऽयं मतस्तत्र।

प्रस्यन्दिप्रमोदाश्रुः सुस्निग्धस्फारलोचनालोकः।

आर्द्रान्तःकरणतया स्नेहपदे भवति सर्व्वत्र॥

प्रीतिस्त्वेकैव तत्तदालम्बनभेदाद्भक्तिप्रेमस्नेहशब्दवाच्यतां भजते पाथइव पाथोदपरिमुक्तं नारिकेलजम्बीराद्युपाश्रयभेदान्मधुरा-म्लादिभावमिति तु युक्तमुत्पश्यामः।

अपरिपुष्टाः स्थायिनः प्रधानाश्च सञ्चारिणो-
भावाः ॥ ४२

विभावादिभिरपरिपुष्टाः स्थायिनः प्राधान्येनाभिव्यक्ताः सञ्चारिणश्च भावा इत्युच्यन्ते। कान्तादिविषयैव रतिः प्रायेण विभावादिभिः परिपुष्टा शृङ्गारतां भजते। देवादिविषया तु भावएव। एवमन्यत्र। उदाहरणम्।

कण्ठकोणविनिविष्टमीश, ते
कालकूटमपि मे महामृतम्।
अप्युपात्तममृतं भवद्वपु-
र्भेदवृत्ति यदि मे न रोचते॥

अत्र देवविषया रतिर्भावः। एवं मुनिराजादिविषयोऽप्युदाहार्य्यः।

क्वाकार्य्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः, स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति॥

अत्राविर्भूतेऽपि वितर्कादौ चिन्तायामेव पर्य्यवसनात् सैव प्राधान्येनाभिव्यज्यते। यथावा,

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥

अत्र प्राधान्येनाभिव्यक्ता कृतान्तं प्रत्यसूया भावः।

## अनौचित्यप्रवर्त्तितास्त्वाभासाः ॥ ४३

अनौचित्येन प्रवर्त्तितास्तु रसा भावाश्च रसवद्भाववच्चाभासन्तएव परं, न तु तत्त्वतो रसा भावाश्च भवन्तीति रसाभासा भावाभासाश्चोच्यन्ते। परोढ़ायां गुरुपत्नग्रादिषु उपनायके बहुनायकेषु च रतिरित्येवमाद्यनौचित्यं शृङ्गारे। सम्भोगशृङ्गारस्तु तिर्य्यगादिगतो न वर्णनीयोऽनौचित्यादित्यप्याहुः। गुर्व्वाद्यालम्बनत्वे हास्यरौद्रयोर्ब्रह्मवधाद्युत्साहे वीरस्योत्तमपात्रगतत्वे भयानकस्यानौचित्यं सहृदयसमाचारवशात् प्रतिपत्तव्यम्। रुद्रटस्त्वाह।

शृङ्गाराभासः स तु यत्र विरक्तेऽपि जायते रक्तः।
एकस्मिन्नपरोऽसौ नाभाष्येषु प्रयोक्तव्यः।

रसाभासस्योदाहरणम्।

रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गोमुहु-
र्मुक्ता कर्णमपेतभीर्धृतधनुर्बाणोहरेः पश्यतः।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्त्तयन्
अंशास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः॥

अत्र कोपस्य गुरुविषयत्वाद्रौद्राभासः। भावाभासस्य त्वस्यपि।

राकासुधाकरमुखी तरलायताक्षी
सस्मेरयौवनतरङ्गितविभ्रमास्या।
तत् किं करोमि कथमत्र तनोमि मैत्रीं
तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः॥

एवमन्यत्राप्युदाहार्य्यम्।

## विरोधश्चाविरोधश्चैतेषाम्॥ ४४

एतेषां रसानां परस्परं विरोधोऽविरोधोऽपिच दृश्यते। तत्र,

**आलम्बनैक्येन विरोधः शृङ्गारवीरकरुणबीभत्स-भयानकरौद्राणाम्॥ ४५**

एकमालम्ब्य शृङ्गारादयो न भवन्तीत्यालम्बनैक्येनामीषां विरोधः।

**आश्रयैक्येन च वीरभयानकयोः॥ ४६**

विरोधइत्यनुवर्त्तते। अतएव वीरो नायकगतत्वेन भयानकस्तु प्रतिनायकगतत्वेन निवेश्यते। चकार आलम्बनैक्यं समुच्चिनोति। तथाचालम्बनैक्येनाश्रयैक्येन चेत्युभयथा विरोधो वीरभयानकयोरिति पर्य्यवस्यति।

**नैरन्तर्य्येण च शान्तशृङ्गारयोः॥ ४७**

विरोध इति वर्त्तते। अतएव नागानन्दे अहो गीतमहो वादित्रमित्यद्भुतमन्तर्निवेश्य शान्तस्य जीमूतवाहनस्य मलयवत्यामनुरागो वर्णित इत्याहुः। चकारादालम्बनैक्येन चानयोर्विरोधोबोद्धव्यः।

**एतेनाऽपरे व्याख्याताः॥ ४८**

एतेनोक्तेन प्रकारेणापरेऽपि विरोधा व्याख्याता वेदितव्याः। आलम्बनैक्येनाश्रयैक्येन नैरन्तर्येणेति त्रिधैव विरोधो रसानां भवति। अनुक्तोऽपि रसान्तराणां विरोधः सहृदसंवादवशादुक्तेनैव प्रकारेण प्रतिपत्तव्यः। तद्यथा। वीरशान्तयोराश्रयैक्येन, वीरभयानकयोरालम्बनैक्येनेत्येवमादिकमूहनीयम्।

**नैको हेतुरपरस्य॥ ४९**

एकविधोविरोधोऽपरविधस्य विरोधस्य हेतुर्न भवति।

## एतेनाविरोधो व्याख्यातः॥ ५०

एतेनोक्तेन विरोधोपदर्शनेनैवाविरोधो व्याख्यातो वेदितव्यः। तद्यथा। सर्वथाऽविरोधोवीरस्याद्भुतरौद्राभ्यां, शृङ्गारस्याद्भुतेन, भयानकस्य बीभत्सेनेति। न परमेवमेवाविरोधः, किन्त्वालम्बनैकेन विरुद्धानां शृङ्गारादीनामप्याश्रयैक्येन त्वविरोधएव। अतएव,

कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम्।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढ़यति रघूणां परिवृढ़ः॥

इत्येकस्मिन्नाश्रये भिन्नालम्बनावुपनिबद्धौ वीरशृङ्गारौ न विरुद्धौ। एवमन्यदप्यूहनीयम्। रसे रीतिनियमो रुद्रटेनोपदर्शितः।

इह वैदर्भी रीतिः पाञ्चाली वा विचार्य्य रचनीया।
मधुराललिते कविना कार्य्ये वृत्ती तु शृङ्गारे॥
वैदर्भीपाञ्चाल्यौ प्रेयसि करुणे भयानकाद्भुतयोः।
लाटीयागौड़ीये रौद्रे कुर्य्याद्यथौचित्यम्॥

इत्यलङ्कारमर्म्म रसपरिच्छेदः समाप्तः। 

## चतुर्थः परिच्छेदः ।

( काव्यभेदनिरूपणम् )

अथ काव्यभेदानाह ॥

**त्रिविधं काव्यं पद्यगद्यमिश्रभेदात् ॥ १**

काव्यं त्रिविधं भवति, पद्यं गद्यं मिश्रञ्चेति । केचित् दृश्यत्वश्रव्यत्वाभ्यां काव्यस्य द्वैविध्यमाहुः । ते तु न परं न्यायेन न सङ्गच्छन्ते, यावत् रसात्मकं वाक्यं काव्यमिति स्वमपि लक्षणं न स्मरन्ति । न हि वाक्यं दृश्यते ।

**छन्दोबद्धं पद्यं, विपरीतं गद्यं, द्वयोर्व्यतिभेदो-मिश्रम् ॥ २**

छन्दोबद्धं वाक्यं पद्यमच्छन्दोबद्धं गद्यं, यत्र पुनरुभयोर्व्यतिभेदस्तन्मिश्रम् ।

**मुक्तकयुग्मकविशेषककलापककुलकान्येका-दिभिः ॥ ३**

एकादिभिरिति प्राथम्यात् पद्येन सम्बध्यते । यत्रैकेन पद्येन

वाक्यार्थपर्य्यवसानं तन्मुक्तकमित्युच्यते । एवं द्वाभ्यां युग्मकं, त्रिभिर्व्विशेषकं, चतुर्भिः कलापकं, तदधिकैः कुलकमिति ।

**महत्त्वात्तद्व्यतिरेकाच्च महाकाव्यं खण्ड-**
**काव्यञ्चेति द्विविधं पद्यम् ॥ ४**

महत्त्वयोगान्महाकाव्यं महत्त्वव्यतिरेकात् खण्डकाव्यञ्चो-च्यते इति द्विविधं पद्यमाहुः । तत्र महाकाव्यलक्षणमाचा-र्य्यैरुक्तमिह प्रदर्श्यते ।

सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।
आशीर्नमस्क्रिया वस्तुनिर्द्देशो वाऽपि तन्मुखम् ॥
इतिहासकथोद्भूतमितरद्वा सदाश्रयम् ।
चतुर्व्वर्गफलोपेतं चतुरोदात्तनायकम् ॥
नगरार्णवशैलर्त्तुचन्द्रार्कोदयवर्णनैः ।
उद्यानसलिलक्रीड़ामधुपानरतोत्सवैः ॥
विप्रलम्भैर्व्विवाहैश्च कुमारोदयवर्णनैः ।
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ॥
अलङ्कृतमसङ्क्षिप्तं रसभावनिरन्तरम् ।
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ॥
सर्व्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम् ।
काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति ॥
न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति ।
यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः ॥
गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।
निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ।

वंशवीर्य्यश्रुतादीनि वर्णयित्वा रिपोरपि ।
तज्जयान्नायकोत्कर्षकथनञ्च धिनोति नः ॥

अन्यत्राप्युक्तम् ।

अष्टसर्गान्न तु न्यूनं त्रिंशत्सर्गाच्च नाधिकम् ।
महाकाव्यं प्रयोक्तव्यं महापुरुषकीर्त्तियुक् ॥
नात्यन्तविस्तरः सर्गस्त्रिंशतो वा न चोनता ।
द्विंशत्या नाधिकं कार्य्यमेतत् पद्यस्य लक्षणम् ॥

लक्ष्ये त्वस्य क्वचिद् व्यभिचारो लक्ष्यते । तथा, क्वचिदेकवंशोत्पन्नाबहवोऽपि नायकाः, नानावृत्तमयः सर्गोऽपि कश्चन क्वचिद्दृश्यते ।

यत् किल महाकाव्यस्यैकदेशमनुसरति तत् खण्डकाव्यमाचक्षते । तच्चैतदनेकधोपनिबध्यते । दूते त्वस्मिन् येन पथा दूतस्य गमनमभिमतं स वर्णनीयः । खण्डकाव्यएव कोषादीनामन्तर्भावः । यदाहुः ।

कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ।
व्रज्याक्रमेण रचितः स एवातिमनोरमः ॥

तथा,

यत्र कविरेकमर्थं वृत्तेनैकेन वर्णयति काव्ये ।
सङ्घातः स निगदितो वृन्दावनमेघदूतादिः ॥

काव्यं नाम तृतीया विधा तु पद्यस्य नात्राद्रियते । सर्व्वेषु खल्वेतत् भेदेष्ववतिष्ठते । अथाप्यवान्तरभेदः स्यात्, तथापि खण्डकाव्यएवान्तर्भवतीति । गद्यं कादम्बर्य्यादि, मिश्रं चम्पूनाटकादीत्यनुसन्धेयम् ।

भूयश्च द्विविधं ध्वनिगुणीभूतव्यङ्ग्यभेदात् ॥ ५

प्रकारान्तरेणापि काव्यं द्विविधं भवति, ध्वनिर्गुणीभूतव्यङ्ग्यश्चेति । तत्र,

वाच्यातिशयिनि व्यङ्ग्ये ध्वनिः ॥ ६

यत्र वाच्यार्थापेक्षया व्यङ्ग्यमधिकं चमत्करोति, स ध्वनिर्नाम काव्यम् ।

अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च ॥ ७

ध्वनिरित्यनुवर्त्तते । ध्वनिस्तावत् द्विविधो भवति, अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च ।

अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृत-
वाच्यश्चाविवक्षितवाच्यः ॥ ८

अविवक्षितवाच्यो ध्वनिरर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधो भवति । क्वचिद्वाच्यं स्वरूपेणानुपयुज्यमानं तद्विशेषरूपेऽर्थान्तरे संक्रमितं सदुपयुज्यते । क्वचित्तु तद्रूपेणाप्यनुपयुज्यमानं सर्वथा परित्यक्तस्वरूपमत्यन्तमेव तिरस्कृतं भवति । क्रमेणोदाहरणम् ।

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥

अत्रोपदेश्यं त्वामाप्तोऽहमुपदिशामीत्यादिरीत्या वाच्यमर्थान्तरं संक्रमितम् । अन्यथाऽऽचरणे चोपहसनीयत्वादिकं व्यङ्ग्यं वाच्यादधिकं चमत्करोति ।

उपकृतं बहु नाम किमुच्यते
सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे,
सुखितमास्स्व ततः शरदां शतम् ॥

अपकारिणं प्रति कस्यचिदुक्तिरियम् । अत्र चोपकारादिकं वाच्यमत्यन्तमेव तिरस्कृतम् । सर्व्वथा परित्यक्तस्वरूपत्वात् । विपरीतलक्षणया ह्यपकारादिकमत्रार्थः । तदतिशयश्च व्यङ्ग्यः ।

## असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चान्यः ॥ ९

अन्योविवक्षितान्यपरवाच्यो ध्वनिर्द्विविधो भवति, असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति । तथाच लक्षणामूलायां व्यञ्जनायां व्यङ्ग्यस्य प्राधान्ये सत्यविवक्षितवाच्यो ध्वनिः । अभिधामूलायान्तु विवक्षितान्यपरवाच्योध्वनिरिति विवेकः । तत्र,

## रसादिः प्रथमः ॥ १०

आदिपदाद्भावरसाभासादेर्ग्रहणम् । रसादिरूपो यो ध्वनिः स प्रथमोऽसंलक्ष्यक्रमव्यङ्ग्य इत्यर्थः । यद्यपि विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति भरतसूत्रे हेतुहेतुमद्भावावगतेरस्त्येव रसादिध्वनौ क्रमः, तथापुत्पलशतपत्रव्यतिभेदादिवत् झटिति सम्पन्नत्वात् वस्तुसौन्दर्य्याच्च स न लक्ष्यते इत्यसंलक्ष्यक्रमव्यङ्ग्यत्वमुच्यते । उदाहरणम् ।

क्षुद्राः सन्त्रासमेते विजहित हरयः, क्षुण्णशक्रेभकुम्भा-
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।

सौमित्रे, तिष्ठ पात्रं त्वमपि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥
अत्र वीरो रसः। भावादीनां पूर्व्वाण्येवोदाहरणान्यनुसन्धेयानि। भावशान्तिभावोदयभावसन्धिभावशवलत्वानामादिपदेनैवोपसंगृहीतानां क्रमेणोदाहरणानि।

तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।
इत्युक्ते क्व तदित्युदीर्य्य सहसा तत् सम्प्रमार्ष्टुं मया
संश्लिष्टा रभसेन तत्सुखवशात् तन्व्याऽपि तद्विस्मृतम् ॥
अत्र कोपस्य शान्तिः।

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपरिग्रहग्लपितया चाटूनि कुर्व्वन्नपि।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
माभूत् सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥
अत्रौत्सुक्यस्योदयः। यद्यप्यत्रावेगस्य शान्तिरपि कियत्यस्त्येव, अथाप्यौत्सुक्योदयएव चमत्कारातिशयं पुष्णातीति तेनैव व्यपदेशः।

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः ॥
अत्रावेगहर्षयोः सन्धिः। क्वाकार्य्यं शशलक्ष्मणः क्व च कुलमित्यादौ वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शवलता। तत्र किल पूर्व्वपूर्व्वोपमर्द्देनोत्तरोत्तरमाविर्भवदधिकं

चमत्करोति। अयञ्च रसादिरूपोध्वनिः पदैकदेशादिगतोऽपि भवति। तत्रोदाहरणम्।

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो-
निराहाराः सख्यः सततरुदितोच्छूननयनाः।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने, मानमधुना॥

अत्र लिखन्निति शतुः। न ह्यत्र लिखनक्रियायाः साध्यमानताऽवद्योतको लिखतीति तिङन्तोनिर्दिष्टः। आस्ते इति प्रारब्धापरिसमाप्तिबोधिकायाः लटः। न त्वासीदित्युक्तम्। भूमिमिति न तु भूमाविति। न हि बुद्धिपूर्वकं किञ्चिदपि लिखति। एवमन्यत्रापि।

## वस्त्वलङ्काररूपः शब्दार्थगतो द्वितीयः॥ ११

वस्तुरूपोऽलङ्काररूपश्च ध्वनिर्द्वितीयः संलक्ष्यक्रमव्यङ्ग्य इत्यर्थः। स च शब्दगतोऽर्थगतश्च। क्रमेणोदाहरणम्।

परस्त्री मातेव क्वचिदपि न लोभः परधने
न मर्य्यादाभङ्गः क्षणमपि न नीचेष्वभिरुचिः।
रिपौ शौर्य्यं धैर्य्यं विपदि विनयः सम्पदि सता-
मिदं वर्त्म भ्रातर्भरत, नियतं यास्यसि सदा॥

अत्रानेन वर्त्मना यानि भूयस्या सम्पदा योक्ष्यसे अन्यथाकरणे च विपदेति सर्व्वथा त्वयाऽनेनैव पथा गन्तव्यमिति वस्तु नियतसदापदाभ्यां व्यज्यते। यथा वा।

कुबेरगुप्तां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य।
दिग्‌दक्षिणा गन्धवहं मुखेन
व्यलीकनिःश्वासमिवोत्ससर्ज्ज ॥

अत्र शब्दशक्तिमहिम्ना तथाविधा काचिन्नायिका प्रतीयते।
यथा वा।

लग्नद्विरेफाञ्जनभक्तिचित्रं
मुखे मधुश्रीस्तिलकं प्रकाश्य।
रागेण बालारुणकोमलेन
चूतप्रवालोष्ठमलञ्चकार ॥

अत्रापि प्रसाधिता काचिदबला प्रतीयते। अनयोः समासोक्तिः। यथा वा,

उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन।
निर्व्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥

अत्र शब्दशक्तिमहिम्ना प्राकरणिकाप्राकरणिकयोरुपमा व्यज्यते। अर्थगतः खल्वपि।

अलसशिरोमणिर्धूर्त्तानामग्रिमः पुत्रि, धनसमृद्धिमयः।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥

अत्रार्थशक्तिमहिम्ना ममैवोपभोग्योऽयमिति वस्तु व्यज्यते।
यथा वा। मम कौमुदीसुधाकरे।

अव्याजमधुरं प्रेम मुग्धानामेव योषिताम्।
कठोरनीतिनिष्ठानां नराणां कृत्रिमं हि तत् ॥

अत्रार्थमहिम्ना व्यतिरेकालङ्कारो व्यज्यते। नात्र शब्दार्थोभयगतत्वेन तृतीया विधोच्यते। तत्रापि यथायथं शब्दार्थगतत्वोपपत्तेः। सोऽयमर्थः क्वचिद्वहिरप्यौचित्येन सम्भाव्यमानः, यथोदाहृते। क्वचिद्वहिरसन्नपि कविना प्रतिभामात्रेणोपनिबद्धः क्वचिच्च कविनोपनिबद्धेन वक्त्रेति। तत्राद्यः स्वतः सम्भवीत्युच्यते परौ तु प्रौढ़ोक्तिसिद्धाविति। परयोरुदाहरणम्।

पौष्पं धनुः पुष्पमयश्च बाणो-
रोलम्बमाला किल शिञ्जिनी च।
हरस्य नेत्रानलदग्धदेहो-
वशे चकारैव हरं मनोभूः॥

इदं मम। अत्र मनोभुवः प्रभावातिशयो व्यज्यते।

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः॥

अत्र व्याघातालङ्कारो व्यङ्ग्यः। अनयोः कविप्रौढ़ोक्तिमात्रनिष्पन्नशरीरोऽर्थः।

सम्पादयन्ननङ्गस्य सहकारशरानमून्।
उज्जृम्भते शनैरेष मलयानलवीजितः॥

इदं मम। अत्र मदनविजृम्भनरूपं वस्तु व्यज्यते।

रजनीषु विमलभानोः
करजालेन प्रकाशितं वीर।
धवलयति भुवनमण्डल-
मखिलं तव कीर्त्तिसन्ततिः सततम्॥

अत्र व्यतिरेकालङ्कारो व्यङ्ग्यः। अनयोः कविनिबद्धवक्तृप्रौढ़ोक्तिमात्रनिष्पन्नशरीरोऽर्थः।

एवमर्थगतस्य वाक्यप्रबन्धगतत्वमप्युदाहार्य्यम् । यत्र चालङ्कारेण वस्तु व्यज्यते तत्र वस्त्वपेक्षयाऽलङ्कारस्य सौन्दर्य्यातिशयेनाधिकचमत्कारहेतुत्वाद्गुणीभूतव्यङ्ग्यत्वमेव वक्तुमुचितमिति सहृदयैरालोचनीयम् ।

## ध्वनिविपरीतं गुणीभूतव्यङ्ग्यम् ॥ १२

यत्र व्यङ्ग्यं वाच्यादधिकं न चमत्करोति, तद्गुणीभूतव्यङ्ग्यं नाम काव्यम् । ध्वन्युक्तदिशा अस्याप्यविवक्षितवाच्यत्वादयो भेदा यथासम्भवमवगन्तव्याः । दिङ्मात्रमुदाक्रियते ।

यस्यासुहृत् कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन् न संप्रति भवामि किमावहामि ॥

अत्र जीवन्निति प्रशस्तं जीवनं लक्षयदर्थान्तरे संक्रमितम् । स्वकार्य्यक्षमं हि जीवनं प्रशस्तमिष्यते । तथाचाहमिदानीं प्रशस्तजीवनवान् न भवामीति पर्य्यवस्यति । तेन च मरणमेव श्रेय इति व्यज्यते । तच्च वाच्यादधिकं न चमत्करोति । तदपेक्षया वाच्यस्यैव चमत्कारित्वात् । एवमन्यत्राप्यनुसन्धेयम् ।

उन्निद्रकोकनदरेणुपिशिताङ्गा-
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥

अत्र चुम्बनमत्यन्तमेव तिरस्कृतम्। प्रभातकालो व्यङ्ग्यः।

जनस्थाने भ्रान्तं कनकमृगतृष्णाऽन्धितधिया
वाचो वै देहीति प्रतिपदमुदश्रु प्रलपितम्।
कृता लंकाभर्तुर्वदनपरिपाटीषु घटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता॥

अत्र शब्दशक्तिमूलो रामत्वावगमः मयाऽऽप्तं रामत्वमित्यनेन कदर्थितः। तदवचने तु ध्वनित्वमव्याहतमेव।

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताड़िते हनुमता द्रोणाद्रिरत्राहृतः।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि, राक्षसपतेः कृत्ता च कण्ठाटवी॥

अत्रार्थशक्तिमहिम्ना केनापीत्यनेन रामः प्रतीयते। तस्याप्यत्रेति पाठे त्वत्रापि ध्वनित्वमेव। यत्र च रसादिरपरस्याङ्गभावमासादयति, तत्रापराङ्गभावेऽपि वस्तुसौन्दर्य्यातिशयत्वानपायात् व्यङ्ग्यस्य वाच्यादतिशयवत्त्वं न व्याहन्यते इति ध्वनित्वमेवोचितं पश्यामः। ध्वनिकारैरप्युक्तम्।

प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्य्यपर्य्यालोचनया पुनः॥

यदि त्वपरत्र रसादावेवाङ्गभावोरसादेस्तदोभयथाऽपि ध्वनित्वमशक्यनिराकरणम्। भावादीनान्तु यत्र यत्र वाच्यादतिशयवत्त्वं तत्रैव ध्वनित्वं, यथोदाहृते कण्ठकोणविनिविष्टमीश ते इत्यादौ। यत्र पुनर्न तथा, तत्र गुणीभूतव्यङ्ग्यत्वमेव भवितुमुचितम्। यथा,

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्त्तिं विबुधरमणीगीयमानां त्वदीयाम् ।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशंकाः
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति ॥

अत्र कवेराजविषयरतिभावो व्यङ्ग्यः । स च गुणीभूतः । तदपेक्षया वाच्यस्यैवाधिकचमत्कारित्वात् । एवमन्यत्रापानुसन्धेयम् । केचित् ध्वनिगुणीभूतव्यङ्ग्ययोरनतिप्रयोजनान् प्रभूततमान् भेदान् परिकल्पयन्ति । बालव्युत्पादनार्थे त्वस्मिन् तदुपवर्णनेन बालानां बुद्धिव्यामोहनं कर्त्तुमनुचितमित्युपारम्यतेऽस्माभिः । यदि वः कुतूहलं, काव्यप्रकाशादिभ्यस्तदवगन्तव्यमिति ।

इत्यलङ्कारसूत्रे काव्यभेदनिरूपणपरिच्छेदश्चतुर्थः ।

---

## पञ्चमः परिच्छेदः ।

( गुणनिरूपणम् )

काव्यस्वरूपं निरूपितमथेदानीं गुणादयो निरूपणीयाः । तत्रोद्देशक्रमादव्यभिचाराच्च प्रथमं गुणान् निरूपयति,—

**नियतावस्थायिनो गुणा ओजोमाधुर्य्य-**
**प्रसादाख्याः ॥ १**

ये किल नियतमवतिष्ठन्ते धर्म्मास्ते गुणाः । अलङ्कारास्त्वनियतावस्थायिनो न गुणत्वं भजन्ते । ते खल्वमी गुणास्त्रिविधाः, ओजोमाधुर्य्यं प्रसादश्चेति ।

**चित्तदीप्तिकारणमोजो यथोत्तरं वीर-**
**बीभत्सरौद्रेषु ॥ २**

स्वभावतः स्निग्धस्यापि सामाजिकचित्तस्य येयं दीप्तिर्विस्तारापरपर्य्यायः कश्चनावस्थाविशेषस्तत्कारणमोजः । तच्चौजो वीरबीभत्सरौद्रेषु यथोत्तरं बोद्धव्यम् । वीराद्बीभत्से ततोऽपि रौद्रे तस्याधिक्यमित्यर्थः ।

द्रुतिहेतुराह्लादकत्वं माधुर्य्यं सम्भोगकरुण-
विप्रलम्भशान्तेषु ॥ ३

यथोत्तरमित्यनुवर्त्तते। द्रुतिश्चित्तस्य गलितत्वमिव। तद्धेतुराह्लादकत्वमानन्दस्वरूपता कश्चन धर्म्मो वा माधुर्य्यम्। तच्च सम्भोगादिषु यथोत्तरमवतिष्ठते। सम्भोगात् करुणे ततो विप्रलम्भे ततोऽपि शान्ते माधुर्य्यमधिकमिति यावत्।

द्वावपि हास्याद्भुतभयानकेषु ॥ ४

हास्यादिषु द्वावप्योजोमाधुर्य्यगुणाववतिष्ठेते। तत्र, हास्यादीनां शृङ्गाराङ्गविभावादिप्रभवत्वे माधुर्य्यं प्रधानं गुणभूतमन्यत्, वीराद्यङ्गविभावादिप्रभवत्वे त्वोजः प्रधानं माधुर्य्यमङ्गमित्येके। हास्ये सर्व्वत्रैव प्रकृष्टं माधुर्य्यं स्वल्पमोजः, अद्भुतभयानकयोस्तु वैपरीत्यमित्यपरे।

सहसा चित्तव्याप्तिहेतुः प्रसादः सर्व्वत्र ॥ ५

कारणान्तरमन्तरेण चित्तव्याप्तिकारणभूतः कश्चन धर्म्मः प्रसादः। व्याप्तिरिह प्रसन्नता विषयान्तरासङ्गनिराकरणेन निर्म्मलतेत्येतत्। स चायं सर्वत्र, सर्वेषु रसेषु सर्व्वासु च रचनासु स्थितिं लभते। तत्रौजसि शुष्केन्धनाग्निवत्, माधुर्य्ये तु स्वच्छसलिलवच्चित्तस्य व्याप्तिरिति विवेचनीयम्।

वर्णविशेषादिभ्यस्तद्विशेषाभिव्यक्तिः ॥ ६

वर्णविशेषादिभ्यस्तद्विशेषाणां गुणविशेषाणामोजःप्रभृतीनामभिव्यक्तिर्भवति। आदिपदात् समासरचनयोर्ग्रहणम्। तत्रैते संग्रहश्लोकाः।

वर्गस्याद्यतृतीयाभ्यां संयोगश्च तदन्तयोः ।
रेफेणोपर्य्यधश्चैव तुल्ययोर्वर्णयोस्तथा ॥
टादिर्णकारश्च गुरुः शषावोजसि सम्मताः ।
दीर्घा च विकटा वृत्तिरुत्कटा रचना तथा ॥
टवर्गवर्जितावर्गा उपर्य्यन्तेन संयुताः ।
णकाररेफौ च लघू माधुर्य्यस्यावबोधकाः ॥
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ।
प्रसादे श्रुतिमात्रेण हेतुरर्थावबोधने ॥

क्रमेणोदाहरणम् । तत्रौजसः,

मूर्द्धामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत्प्रयासः ॥

माधुर्य्यस्य,

लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि ॥

प्रसादस्य,

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित् पुण्येऽरण्ये शिवशिवशिवेति प्रलपतः ॥

एवमन्यदप्युदाहार्य्यम् ।

## वक्त्राद्यौचित्यादन्यथाभावोरचनादीनाम् ॥ ७

वक्तृवाच्यप्रबन्धानामौचित्याद्रचनादीनामन्यथाभावो बोद्धव्यः ।

उदाहरणम् ।

मन्थायस्तार्णवाम्भःप्लुतिकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटाऽन्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽसौ ॥

अत्र वाच्यस्य न क्रोधादिव्यञ्जकता काव्यस्याभिनेयार्थमिति सुकुमारा एव रचनादयो यद्यप्युचिताः, तथापि कोपनस्वभावो-भीमसेनोऽत्र वक्तेति तदौचित्यादेव रचनादयः । एवमग्रेऽपि ।

प्रौढ़च्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्य्यग्वलितरविरथनारुणेनेक्ष्यमाणम् ।
कुर्व्वत् काकुत्स्थवीर्य्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥

अत्र वाच्यौचित्याद्रचनादयः । एवमाख्यायिकायां शृङ्गारादावपि विकटाएव वर्णादयो न मसृणाः । करुणविप्रलम्भयोस्त्वतिसौकुमार्य्यात् तस्यामपि न दीर्घसमासादयः । कथायां रौद्रादिष्वपि नात्यन्तमुद्धताः । नाटकादावभिनयसौकर्य्यार्थं न दीर्घसमासादय इत्येवमादिकमूहनीयम् ।

## शब्दार्थगुणा दशैकेषाम् ॥ ८ ॥

एकेषामालङ्कारिकाणां मते दश शब्दगुणा दशैव चार्थगुणा-भवन्ति । यदाहुः ।

श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः॥

तत्र शब्दगुणास्तावदुपवर्ण्यन्ते। येन गुणेन बहूनां पदानामेकपदवदवभासो भवति सोऽयं मसृणत्वापरपर्य्यायः श्लेषः। उदाहरणम्।

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयोनाम नगाधिराजः।

न पुनः, सूत्रं ब्राह्मपुरःस्थले। भ्रमरीवल्गुगीतयः। तड़ित्कलिलमाकाशमिति। एवन्तु श्लेषो भवति। ब्राह्मं सूत्रमुरःस्थले। भ्रमरीमञ्जुगीतयः। तड़िज्जटिलमाकाशमिति वामनः। शैथिल्यं प्रसादः। स खल्वयमोजोविपर्य्ययात्मा दोषोऽपि सन्नोजसा मिश्रितोगुणत्वं भजते। तत्र क्वचिदोजःप्रसादयोः साम्यम्। क्वचिदोजः प्रसादादुत्कृष्टम्। क्वचित्प्रसाद ओजस उत्कृष्टः। क्रमेणोदाहरणम्।

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्वा यूने सितातपवारणम्।
व्रजति गगनं भल्लातक्याः फलेन सहोपमाम्।
कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो-
न च मलयजं सर्व्वाङ्गीनं न वा मणियष्टयः।

कठिनेन सुकुमारेण वा मार्गेणोपक्रान्तस्य तेनैव निर्व्वहणं समता। यथा, अस्त्युत्तरस्यामित्यादि। अदीर्घसमासत्वं माधुर्य्यम्। पूर्व्वोक्तमुदाहरणम्। विपर्य्ययस्तु,

चलितशवरसेनादत्तगोशृङ्गचण्ड-
ध्वनिचकितवराहव्याकुला विन्ध्यपादाः।

अपारुष्यं सुकुमारता । उक्तमुदाहरणम् । झटित्यर्थावबोध-हेतुत्वमर्थव्यक्तिः । पूर्वोक्तमुदाहरणम् । पदानां नृत्यप्रायत्वं विकटत्वापरपर्य्यायमुदारता । उदाहरणम् ।

स्वचरणविनिविष्टैर्नूपुरैर्नर्त्तकीनां
झटिति रणितमासीत्तत्र चित्रं कलञ्च ।

एवं किलोदारता न भवति ।

चरणकमलयुक्तैर्नूपुरैर्नर्त्तकीनां
झटिति रणितमासीन्मञ्जु चित्रञ्च तत्र ।

बन्धगाढ़त्वमोजः । यथा,

विलुलितमकरन्दा मञ्जरीर्नर्त्तयन्ति ।

एवं खल्वोजो न भवति ।

विलुलितमधुधारा मञ्जरीर्लोलयन्ति ।

बन्धस्योज्ज्वलत्वं कान्तिः । यथा,

कुरङ्गीनेत्रालीस्तबकितवनालीपरिसरः ।

एतस्य खल्वभावे पुराणच्छायेत्युच्यते । आरोहपूर्व्वकोऽव-रोहोऽवरोहपूर्व्वको वा आरोहः समाधिः । क्रमेणोदाहरणम् ।

निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे ।

अत्रारोहपूर्व्वकोऽवरोहः । अवरोहपूर्व्वक आरोहः खल्वपि ।

नराः शीलभ्रष्टाव्यसनइव मज्जन्ति तरवः ।

ओजःप्रसादयोः क्वचिद्भागे तीव्रावस्थायामारोहावरोहौ बोद्धव्यौ ।

एवं श्लेषादयोदश शब्दगुणाः प्रदर्शिताः । अथेदानीं तए-वार्थगुणा दश प्रदर्श्यन्ते । तत्र घटना श्लेषोनामार्थगुणः । घटना पुनः क्रमकौटिल्यानुल्वणत्वोपपत्तियोगः । उदाहरणम् ।

क्षत्त्वैवं मनुजपतेर्महद्व्यलीकं
स्थातुं हि क्षणमपि न प्रशस्तमस्मिन् ।
मैत्रेय, क्षिप निगड़ं पुराणकूपे
पश्येयुः क्षितिपतयो हि चारदृष्ट्या ॥

यथा वा,

कामं प्रदोषतिमिरेण न दृश्यसे त्वं
सौदामनीव जलदोदरसन्धिलीना ।
त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं
गन्धश्च भीरु, मुखराणि च नूपुराणि ॥

शकारं गूढ़ं वञ्चयतो वसन्तसेनामनुकूलयतस्तदीयमाल्यनूपुरपरिवर्जनमभिप्रयतश्च विटस्य वसन्तसेनां प्रत्युक्तिरियम् ।

प्रयोजकमात्रार्थपरिग्रहोऽर्थवैमल्यापरनामा प्रसादः । उदाहरणम् ।

स शुश्रुवान् मातरि भार्गवेण
पितुर्नियोगात् प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं त-
दाज्ञा गुरूणां ह्यविचारणीया ॥

एवं किल प्रसादो न भवति ।

सदाशिवं नौमि पिनाकपाणिम् ।

पिनाकपाणिमिति विशेषणं खल्वत्र न किमपि प्रयोजयति ।

प्रक्रमाभेदोऽवैषम्यापराख्या समता । उदाहरणम् ।

च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसद्रुमा-
मनसि च गिरं बध्नन्तीमे किरन्ति न कोकिलाः ।

अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो-
नवजरठतामालम्बन्ते क्रमोदयदायिनीम् ॥

ऋतुसन्धिप्रतिपादनपरोऽयं श्लोकः । द्वितीयपादे,

मलयमरुतः सर्पन्तीमे वियुक्तधृतिच्छिदः ।

इति पाठे तु प्रक्रमो भिद्यते । सुखावगम्यत्वं वा समता । तत्रोदाहरणम् ।

केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥

उक्तिवैचित्र्यं माधुर्य्यम् । उदाहरणम् ।

दिवं यदि प्रार्थयसे वृथा श्रमः
पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना
न रत्नमन्विष्यति मृग्यते हि तत् ॥

परुषेऽप्यर्थेऽपारुष्यं सौकुमार्य्यम् । उदाहरणम् ।

सारसवत्ता विहता न वका विलसन्ति चरति नो कङ्कः ।
सरसीव कीर्त्तिशेषं गतवति भुवि विक्रमादित्ये ॥

अत्र मृते इत्यत्र कीर्त्तिशेषं गतवतीति । एवमेकाकिनं देवताद्वितीयमिति कथयन्ति । गच्छेत्यत्र साधयेति च । एवमन्यदप्यनुसन्धेयम् । वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः । उदाहरणम् ।

प्रथममलसैः पर्य्यस्ताग्रैः स्थितं पृथुकेसरै-
र्विरलविरलैरन्तःपत्रैर्मनाङ्मिलितं ततः ।
तदनु वलनामात्रं किञ्चिद्व्यधायि वहिर्दलै-
र्मुकुलनविधौ वृद्धाब्जानां बभूव कदर्थना ॥

ग्राम्यत्वप्राप्तावप्यग्राम्यत्वमुदारता। उदाहरणम्।

त्वमेवंसौन्दर्य्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे, संवदति वा-
मतः शेषं यत् स्याज्जितमिह तदानीं गुणितया॥

ग्राम्यत्वं खल्वपि।

स्वपिति यावदयं निकटे जनः
स्वपिमि तावदहं किमपैति ते।
इति निगद्य शनैरनुमेखलं
मम करं स्वकरेण रुरोध सा॥

प्रौढ़िरोजः। सा पुनः पञ्चविधा। यदाहुः।

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा।
प्रौढ़िर्व्याससमासौ च साभिप्रायत्वमस्य च॥

क्रमेणोदाहरणम्।

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः।

अत्र चन्द्रपदार्थे वक्तव्ये अत्रेर्नयनसमुत्थं ज्योतिरिति वाक्यं रचितम्। वाक्यं च पदसमूहः।

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी।

अत्र शीतकालोष्णा ग्रीष्मकालशीतला तप्तकाञ्चनवर्णा योषिदिति वाक्यार्थे श्यामेति पदाभिधानम्। यदाहुः।

शीतकाले भवेदुष्णा उष्णकाले च शीतला।
तप्तकाञ्चनवर्णा या सा श्यामा परिकीर्त्तिता॥

वाक्यस्य व्यासोविस्तरः, समासः संक्षेपः। तत्र व्यासो यथा।

अयं नानाऽऽकारो भवति सुखदुःखव्यतिकरः
सुखं वा दुःखं वा न भवति भवत्येव च ततः।
पुनस्तस्मादूर्द्ध्वं भवति सुखदुःखं किमपि तत्
पुनस्तस्मादूर्द्ध्वं भवति न हि दुःखं न च सुखम्॥

अत्रैकस्य वाक्यार्थस्य किञ्चिद्विशेषनिवेशादनेकैर्वाक्यैरभिधानं व्यासः। समासो यथा।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥

वाक्यस्य साभिप्रायत्वं खल्वपि।

सोऽयं सम्प्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा
जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः॥

आश्रयः कृतधियामित्यस्य वसुबन्धुसाचिव्योपक्षेपपरत्वात् साभिप्रायत्वम्। दीप्तरसत्वं कान्तिः। उदाहरणम्।

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः॥

काव्यानुगुणस्यार्थस्य दर्शनं समाधिः। द्विविधस्वार्थोऽयोनिरन्यच्छायायोनिश्च। क्रमेणोदाहरणम्।

सद्यो मुण्डितमत्तहूणचिवुकप्रस्पर्द्धि नारङ्गकम्।

सोऽयमन्यैरनाविष्कृतपूर्व्व एवार्थः कविनोपनिबद्धः।

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता काऽपि।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी॥

अत्र नीलोत्पलनयनयोरन्यैरुद्भावितपूर्व्वमेव सादृश्यं विच्छि-

न्तिविशेषेणोपनिबद्धम् । भूयश्चार्थो द्विविधो व्यक्तः सूक्ष्मश्च । तत्र व्यक्तः स्फुट उदाहृतएव । सूक्ष्मस्तु द्विविधो भाव्यो वासनीयश्चेति । तत्र शीघ्रनिरूपणागम्यो भाव्यः, एकाग्रताप्रकर्षगम्यो वासनीयः । तत्र भाव्यो यथा ।

अन्योन्यसंवलितमांसलदन्तकान्ति
सोल्लासमाविरलसंवलितार्द्धतारम् ।
लीलागृहे प्रविरले किलकिञ्चितेषु
व्यावर्त्तमानविनयं मिथुनं चकास्ति ॥

वासनीयः खल्वपि ।

अवहित्थवलितजघनं विवर्त्तिताभिमुखकुचतटं स्थित्वा ।
अवलोकितोऽहमनया दक्षिणकरकलितहारलतम् ॥

तदिमे दश शब्दगुणा दश चार्थगुणाश्चिरन्तनैर्व्युत्पादिताः । केचिदमीषां स्वाभिमतेषु गुणत्रयेष्वन्तर्भवन्ति केचिद्दोषाभावात्मतया वैचित्र्यमात्रावहतया च नैव गुणतां भजन्ते इति कृत्वा प्रत्याख्याताः पुनरन्यैः । इदन्त्विह वक्तव्यम् । गुणविपर्य्ययात्मानोदोषा इति तावच्चिरन्तनानामभ्युपगमः । तदत्र दोषाभावमात्ररूपतया न गुणत्वमित्यस्थानएवायमन्येषां संरम्भ इति कृतबुद्धयोविदांकुर्व्वन्तु । तदेतस्मात् कारणादस्माभिस्तत्प्रत्याख्यानाय न प्रयत्यते । केवलं बालावगतये चिरन्तनानुमता गुणा दिङ्मात्रेणोपदर्शिताः ।

इत्यलङ्कारसूत्रे गुणनिरूपणपरिच्छेदः पञ्चमः ।

# षष्ठः परिच्छेदः ।

( शब्दालङ्कारनिरूपणम् । )

अथेदानीं काव्यशोभाकरानलङ्कारानभिधातुं प्रतिजानीते,—

**अथातः काव्यालङ्कारं व्याख्यास्यामः ॥ १**

अलङ्क्रियते अनेनेत्यलङ्कारः । तस्य लक्षणमाह—

**स प्रतिभोत्थितं वैचित्र्यम् ॥ २**

स इत्यलङ्कारमाह । प्रतिभा नवनवोन्मेषशालिनी प्रज्ञा । तदुत्थितं यद्वैचित्र्यं सहृदयहृदयाह्लादकः काव्यशोभाकरः कश्चन धर्म्मः, सोऽलङ्कारः । प्रतिभोत्थितमिति कारणप्रज्ञापनार्थं विशेषणम् । वैचित्र्यमेव ह्यलङ्कारलक्षणम् । यत्र तु न वैचित्र्यं तत्र संशयादावलङ्कारत्वमपि नास्ति । विभजते,

**शब्दार्थयोरन्वयव्यतिरेकाभ्याम् ॥ ३**

स इत्यनुवर्त्तते । सोऽलङ्कारः शब्दार्थयोर्वर्त्तते शब्दगतोऽर्थगतश्चेत्यर्थः । कथं ? अन्वयव्यतिरेकाभ्याम् । अन्वयव्यतिरेकाभ्यां ह्यलङ्कारस्य शब्दार्थगतत्वं निश्चीयते । यः खल्वलङ्कारः शब्दान्वयव्यतिरेकावनुविधत्ते ; तस्मिन् शब्दे सत्येव भवति असति तु न भवति, सोऽयं शब्दालङ्कारः । यः पुनरर्थान्वयव्यतिरेका-

वनुविधत्ते ; असत्यपि तस्मिन् शब्दे तदर्थकशब्दान्तरे सत्यपि भवति, सोऽर्थालङ्कारः । तथाच शब्दपरिवृत्त्यसहोऽलङ्कारः शब्दालङ्कारः । शब्दपरिवृत्तिसहश्चार्थालङ्कारः । एवञ्च शब्द-परिवृत्तिसहत्वासहत्वाभ्यां शब्दार्थालङ्कारोऽपि सिद्धोभवति । अयमेवोभयालङ्कार इत्युच्यते । स च यथायथं शब्दगतोऽर्थगतश्च ।

क्रमानुरोधाद।दौ शब्दालङ्कारे वक्तव्ये प्राधान्यात् प्रथममनु-प्रासमाह,

## सदृशशब्दावृत्तिरनुप्रासः ॥ ४

साद्दृश्यञ्चात्र एकस्थानोच्चार्य्यत्वेन कत्वादिना चेष्यते । शब्द-शब्दोवर्णप्रातिपदिकपदसाधारणः । विभजते,

## अन्त्यश्रुतिलाटच्छेकवृत्त्यनुप्रासभेदात् पञ्चविधः ॥ ५

सोऽयमनुप्रासः पञ्चविधोभवति, अन्त्यानुप्रासः, श्रुत्यनुप्रासः, लाटानुप्रासः, छेकानुप्रासः, वृत्त्यनुप्रासश्चेति । तत्र,

## यथाऽवस्थितस्यान्तव्यञ्जनस्य पूर्व्वस्वरेणावृत्ति-रन्त्यानुप्रासः ॥ ६

यथावस्थितस्येति यथासम्भवं संयुक्ताक्षरानुस्वारविसर्गादि-सहितस्यान्तव्यञ्जनस्य तत्पूर्व्ववर्त्तिना स्वरेण सहितस्यावृत्ति-रित्यर्थः । एष च पादस्य पदस्य चान्ते प्रयुज्यते । पादान्ते यथा ।

दिनयामिन्यौ सायं प्रातः
शिशिरवसन्तौ पुनरायातः ।
कालः क्रीड़ति गच्छत्यायु-
स्तदपि न मुञ्चत्याशावायुः ॥

पदान्ते खल्वपि । मन्दं हसन्तः पुलकं वहन्तः इत्यादि । पूर्व्वेण स्वरेण सहितस्यावृत्तावधिकं हृदयङ्गमं भवति इति पूर्व्व-स्वरेणेत्युक्तम् । पूर्व्वस्वरविनाकृतस्याप्यन्त्यव्यञ्जनस्यावृत्तिर्दृश्यते । यथा,

पुनरपि मरणं पुनरपि जननं
पुनरपि जननीजठरे शयनम् ।
क्षणमपि सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका ॥

## स्थानतः समानश्रुतीनां वर्णानामावृत्तिः श्रुत्यनुप्रासः ॥ ७

स्थानं वर्णानामुच्चारणस्थानं कण्ठताल्वादि । ततोहेतोः समानश्रुतीनां एकस्थानोच्चार्य्याणामिति यावत् । उदाहरणम् ।

एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः ।
ततः प्रभृति धर्म्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥

अत्र प्रथमपादे षकाररेफौ मूर्द्धन्यौ । जकारयकारौ तालव्यौ । दकारलकारौ दन्त्यौ । एवं पादान्तरेष्वप्यूह्यम् । वर्गान्तवर्ण-युक्तयोः प्रथमद्वितीययोः तृतीयचतुर्थयोश्च वर्णयोरावृत्तावयमधिकं हृदयङ्गमो भवति । तत्राप्युत्तरोरमणीयस्तरः । यथा,

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिन्दिवं गन्धवहः प्रयाति ।
बिभर्त्ति शेषः सततं धरित्रीं
षष्ठांशवृत्तेरपि धर्म्म एषः ॥

अत्र द्वितीयपादे नकारसंयुक्तयोर्दकारधकारयोरावृत्तिः ।

## तात्पर्य्यभेदमात्रेण शब्दार्थयोरावृत्ति-लाटानुप्रासः ॥ ८

आवृत्तिः पुनरुक्तिः । उदाहरणम् ।

तदागाराण्यरण्यानि वियोगो बन्धुभिर्यदा ।
तदागाराण्यरण्यानि संयोगो बन्धुभिर्यदा ॥

ममेदं पद्यम् । अत्र प्रथमपादे यथान्यासमगारारण्ययोरुद्देश्य-विधेयभावः । तृतीये वैपरीत्येन ।

तदा जायन्ते गुणाः यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

अत्रार्थान्तरसंक्रमितवाच्ये ध्वनौ द्वितीयकमलशब्दस्य विकाश-सौरभसौन्दर्य्यादिमत्कमलपरतया धर्म्मिणः कमलरूपस्यार्थस्या-वृत्तावपि तद्धर्म्मस्य विकाशसौरभादेरावृत्त्यभावात् नायमलंकारः । यत्र हि केवलं तात्पर्य्यभेदेन तावन्मात्रोऽर्थः पुनरुच्यते, तत्रैवास्य प्रवृत्तिः । अयमेव शब्दानुप्रास इत्युच्यते । अयमनेकपदानामेकस्य पदस्य प्रातिपदिकमात्रस्य चावृत्तिभेदात् त्रिधा भिद्यते । तत्रा-नेकपदावृत्तावुदाहृतम् । एकपदस्यावृत्तौ यथा,

उमाया वदनं साक्षादकलंकः सुधाकरः।
सुधाकरस्तपस्तप्त्वा कलंकरहितोऽभवत्॥

यथा वा,

एष राजा महाबाहुः साक्षादेव शतक्रतुः।
शतक्रतुः क्रतुत्यक्तसहस्रनयनोऽभवत्॥

ममैते पद्ये। प्रातिपदिकस्य खल्वपि।

सितकरकररुचिविरभा
विभाकराकार, धरणिधर, कीर्त्तिः।
पौरुषकमला कमला
साऽपि तवैवास्ति नान्यस्य॥

करशब्दस्यैकस्मिन् समासे, विभाशब्दस्य भिन्नयोः समासयोः, कमलाशब्दस्य समासासमासयोश्चावृत्तिरितिशतद्रीत्या त्रैविध्यं तु न लक्षितम्। वैचित्र्यविशेषाभावात्। एवंविधवैचित्र्यस्य प्रभूततमत्वाच्च।

## क्रमस्वरूपाभ्यामनेकस्य सकृदावृत्ति-श्छेकानुप्रासः॥ ८

तेनैव क्रमेण तेनैव स्वरूपेण चानेकस्य व्यञ्जनस्यैकवारमावृत्तिश्छेकानुप्रासः। उदाहरणम्,

आदाय वकुलगन्धानन्धीकुर्व्वन् पदे पदे भ्रमरान्।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः॥

अत्र पूर्व्वार्द्धे नकारधकारयोः संयुक्तयोरुत्तरार्द्धे वेरी वारीत्यसंयुक्तयोः पावनः पवनइति बहूनां व्यञ्जनानां सकृदावृत्तिः।

## विपरीतोवृत्त्यनुप्रासः ॥ १०

छेकानुप्रासविपरीतो वृत्त्यनुप्रासो भवति । तेन (१) क्रमतः स्वरूपतश्चानेकस्यासकृदावृत्तिः, (२) स्वरूपमात्रेणानेकस्य (३) सकृदसकृद्वा आवृत्तिः, एकस्य (४) सकृ (५) दसकृद्वा आवृत्तिरिति वृत्त्यनुप्रासः पञ्चविधो भवति । क्रमेणोदाहरणम् ।

काकली कोकिलालीनां तथा कलकलो महान् ।
काकानां स्फुरति प्रायः पूर्व्ववैव जनादरः ॥

अत्र कलयोः स्वरूपतः क्रमतश्चासकृत् आवृत्तिः ।

अनन्यसदृशाकारो महाबाहुर्महाबलः ।
कोऽयं पञ्चाननप्रख्यो नासीरे रसति स्फुटम् ॥

अत्र स-रयोः स्वरूपतः सकृत् साम्यम् । पूर्व्वार्द्धे बकारस्यापि ।

रवैर्वारिदवद्घोराः सुघोरे सङ्गरान्तरे ।
प्रतिपच्चान् चपाकान्तकान्तयोऽपच्चयन्नमी ॥

अत्र पूर्व्वार्द्धे र-वयोः स्वरूपतोऽसकृत्साम्यं, उत्तरार्द्धे प-चयोः । ममैतानि पद्यानि ।

न करुणा प्रभवत्यपि वासवे
न वितथा परिहासकथास्वपि ।
न च सपत्नजनेष्वपि तेन वा-
गपरुषा परुषाक्षरमीरिता ॥

अत्र द्वितीयपादे एकस्य थकारस्य सकृदावृत्तिः । यथा वा,

यदवोचत वीक्ष्य मानिनी
परितः स्नेहमयेन चक्षुषा ।

अपि वागधिपस्य दुर्व्वचं
वचनन्तद्विदधीत विस्मयम् ॥

अत्र प्रथमे पादे एकस्य वकारस्य सकृदावृत्तिः। यथा वा,

व्याधूतचूतपुष्पाणामामोदभरमौखराः।
अमी मधुकराः कामं कलं गुञ्जन्ति भूरिशः ॥

ममेदम्। अत्र प्रथमपादे एकस्य तकारस्य सकृदावृत्तिः। किञ्च अत्रैव द्वितीयपादादावेकस्य रेफस्यासकृत्। यथा वा,

अस्त्रज्वालावलीढ़प्रतिबलजलधेरन्तरौर्व्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्व्वधन्वीश्वराणाम्।
कर्णालं सम्भ्रमेण व्रज कृप, समरं मुञ्च हार्दिक्य, शंकां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥

अत्र प्रथमे पादे लकारस्य, द्वितीये रेफस्य, तृतीये ककारस्य, चतुर्थे तकारस्यासकृदावृत्तिः। प्रसङ्गाद्वृत्तिं विभजते।

## मधुरवर्णा वृत्तिरुपनागरिका ॥ ११

माधुर्य्यव्यञ्जकवर्णघटिता या वृत्तिः रचनाविशेषः, सेयमुपनागरिकोच्यते। मधुरावर्णा यथा,

मूर्द्ध्नि रान्तवर्णसंयुक्ता वर्गाष्टठडढैर्व्विना।
लघुर्णकारो रेफश्च त इमे मधुरा मताः ॥

माधुर्य्यव्यञ्जकत्वान्मधुराः। उदाहरणम्,

तरङ्गभङ्गिसङ्घाततुङ्गा सागरसङ्गता।
गङ्गा मङ्गलमादध्यात् पश्चाङ्गप्रणताऽनिशम् ॥

इदं मम।

## परुषैः परुषा ॥ १२

परुषवर्णैर्घटिता वृत्तिः परुषेत्युच्यते। परुषा वर्णा यथा—

आद्यैर्द्वितीयास्तुर्य्याश्च तृतीयैः रेण तुल्यकैः।
युक्ताः टादिः शषौ वर्णा परुषाः परिकीर्त्तिताः॥

वर्गस्य प्रथमवर्णयुक्ता द्वितीयवर्णाः, तृतीययुक्ताश्चतुर्थाः, रेफेण तुल्येन वर्णेन च युक्ताः सर्व्वे, ट ठ ड ढाः, शषौ, चेत्यमी वर्णाश्रोजोव्यञ्जकत्वात् परुषा इत्युच्यन्ते। उदाहरणम्

मूर्द्धामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्कर्षिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः॥

## परैः कोमला ॥ १३

मधुरपरुषभिन्नैर्वर्णैर्घटिता वृत्तिः कोमलेत्युच्यते। इयमेव ग्राम्येत्यन्ये। उदाहरणम्।

अपसारय घनसारं कुरु हारं दूरएव किं कमलैः।
अलमलमालि, मृणालैरिति वदति दिवानिशं बाला॥

## ताएव वैदर्भीगौड़ीपाञ्चाल्योरीतयः॥ १४

उपनागरिका वैदर्भी रीतिः। परुषा गौड़ी। कोमला पाञ्चाली। वैदर्भीपाञ्चालीसंकीर्णा लाटीति केचित्। रुद्रटस्त्वनुप्रासस्य वृत्तिभेदानेवमाचष्टे,

"मधुरा प्रौढ़ा परुषा ललिता भद्रेति वृत्तयः पञ्च।
वर्णानां नानात्वादस्येति यथार्थनामफला: ॥"

तत्र, मधुरा व्याख्यातैव। विशेषस्तु तन्मते लकारसंयुक्तो-लकारोऽपि मधुरायां प्रयुज्यते। अन्त्यवर्णान् टवर्गञ्च विहाय उपरि रेफसंयुक्ताः कादयोवर्गवर्णाः, तथा यकारणकारौ, ककार-पकाराभ्यामुपरि युक्तस्तकारश्चेत्यमी वर्णाः प्रौढ़ाः। तद्‌घटिता वृत्तिः प्रौढ़ेत्युच्यते। एवं परत्र। उपरि सर्व्ववर्णैर्युक्तः सकार-उपर्य्यधश्च रेफसंयुक्ताः सर्व्वे वर्णाः, उपर्य्यधो वा रेफसंयुक्तो-हकारश्चेत्यमी वर्णाः परुषाः। लघवो घकारधकारभकाराः, वर्णान्तरासंयुक्तो लकारश्चेत्यमी वर्णा ललिताः। शिष्टा वर्णा-भद्राः। भोजदेवस्तु द्वादशविधां वृत्तिमाह। तद्यथा,

कार्णाटी कौन्तली कौङ्की कौङ्कणी वाणवासिका।
द्राविड़ी माथुरी मात्सी मागधी ताम्रलिप्तिका।
औण्ड्री पौण्ड्रीति विद्वद्भिः सा द्वादशविधेष्यते ॥

तत्र,

कवर्गानुप्रासवती कार्णाटी परिकीर्त्तिता।
चवर्गात् कौन्तली ज्ञेया कौङ्की वृत्तिष्टवर्गतः ॥
कौङ्कणी तु तवर्गात् स्यात् पवर्गाद्‌ वाणवासिका।
अन्तस्थेभ्यो द्राविड़ी स्यादुष्मभ्यो माथुरी मता।
मात्सी तु द्वित्रिवर्गेभ्यः, कथ्यते ताम्रलिप्तिका।
मूर्द्ध्नि वर्गान्त्यसंयुक्तैर्व्वर्गवर्णैर्विनिर्मिता ॥
सरूपसंयुक्तवर्णग्रथितौण्ड्री प्रकीर्त्तिता।
विरूपसंयुक्तवर्णैर्वृत्तिः पौण्ड्री विरच्यते ॥

चवर्गात्, चवर्गानुप्रासात्। एवं परत्र। उदाहरणानि तु ग्रन्थगौरवभयात् स्वयमनायासेनोह्हितुं शक्यन्ते इत्यतश्च न प्रदर्शितानि।

भिन्नार्थानामनर्थकानामर्थवदनर्थकानां वा
तथैवावृत्तिर्यमकम्॥ १५

स्वरव्यञ्जनसमुदायरूपस्य वर्णसमुदायस्य तेनैव क्रमेणावृत्तिर्यमकम्। आवर्त्त्यमानयोर्वर्णसमुदाययोः क्वचिद्भिन्नार्थत्वं, क्वचिदनर्थकत्वं, कचिदेकस्यार्थवत्त्वमपरस्यानर्थकत्वम्। उदाहरणम्।

नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः॥

अत्र पलाशपलाशेत्यत्र सुरभिं सुरभिमित्यत्र च द्वयोर्भिन्नार्थत्वं, रभिंसु रभिंसु इत्यत्र द्वयोरनर्थकत्वं, परागपरागेत्यत्र पूर्व्वस्यार्थवत्त्वमुत्तरस्यानर्थकत्वं, लतान्तलतान्तेत्यत्र तु तद्वैपरीत्यम्। तच्चैतद्यमकं प्रभूततमभेदं न त्वेकान्तमधुरमिति लक्षणतस्तद्भेदा न निरूपिताः। उदाहरणतस्तु कतिचित् प्रदर्श्यन्ते।

चक्रन्दहतारं चक्रन्दहतारम्।
खड्गेन तवाजौ राजन्नरिनारी॥

अत्र प्रथमपादस्य द्वितीयपादे यमनान्मुखयमकम्।

सन्नारीभरणोमायमाराध्य विधुशेखरम्।
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय॥

प्रथमपादस्य तृतीयपादे यमनात् सन्दंशयमकमिदम्।

मुदारताड़ीसमराजिराजितः
प्रवृद्धतेजाः प्रथमो महीभृताम् ।
भवान् विभर्त्तीह नगश्च मेदिनी-
मुदारताडीसमराजिराजितः ॥

प्रथमपादस्य चतुर्थपादे यमनादावृत्तियमकमेतत् । द्वितीय-पादस्य तृतीये चतुर्थे चावृत्तौ यथाक्रमं गर्भयमकं सन्दष्ट-यमकं चोच्यते । क्रमेणोदाहरणम् ।

योराजयमासाद्य भवत्यचिन्त्यः
समुद्रतारम्भवतः सदैव ।
समुद्रतारम्भवतः सदैव
प्रमाणमारभ्य पयस्युदास्ते ॥

वहति यः परितः कनकस्थलीः
स हरितालसमाननवांशुकः ।
अचल एष भवानिव राजते
स हरितालसमाननवांशुकः ॥

तृतीयपादस्य चतुर्थपादे यमने पुच्छयमकमित्युच्यते । यथा,

उत्तुङ्गमातङ्गकुलाकुले यो-
व्यजेष्ट शत्रून् समरे सदैव ।
स सारमानो यमहारिचक्रं
ससारमानीयमहारिचक्रम् ॥

प्रथमस्य द्वितीये, तृतीयस्य चतुर्थे यमने युग्मयमकम् । यथा,

विनायमेनो नयतासुखादिना
विना यमेनोनयतासुखादिना ।

महाजनोऽदीयत मानसादरं
महाजनोदीयतमानसादरम् ॥

प्रथमस्य चतुर्थे, द्वितीयस्य तृतीये च यमने परिवृत्ति-यमकम्। यथा,

मुदारतासौ रमणीयतायां
स्मरस्यदोलं कुरुते न वोढ़ा।
स्मरस्यदोऽलंकुरुतेऽनवोढ़ा
मुदारतासौ रमणीयतायाम् ॥

प्रथमस्य द्वितीयादिपादत्रयेषु यमने पंक्तियमकम्। यथा

सभाजनेनोपरि पूरितासौ
सभा जनेनोपरिपूरितासौ।
सभा जने नोऽपरिपूरितासौ
सभाजने नोपरिपूरितासौ ॥

अर्द्धावृत्तिः समुद्गकयमकं, श्लोकावृत्तिर्महायमकम्। क्रमे-णोदाहरणम्।

नमाम लोकोविदमानवेन
महीनचारित्रमुदारधीरम्।
न मामलोऽकोविदमामवेन
महो न चारित्रमुदारधीरम्।

स त्वारं भवतोऽवश्यमवलं विततारवम्।
सर्व्वदा रणमानैषीदवानलसमस्थित: ॥
सत्वारम्भरतो बश्यमवलम्बिततारवम्।
सर्व्वदारणमानैषो दवानलसमस्थित: ॥

एवं, एकैकं पादं द्विधा त्रिधा चतुर्धा वा विभज्य प्रथमादि-द्वितीयादावनियमेन च यथेच्छं यमनात् प्रभूततरा भेदा भवन्ति। दिङ्मात्रमुदाह्रियते।

उच्चारणज्ञोऽथ गिरां दधान-
मुच्चारणत्पक्षिगणास्तटीस्तम्।
उत्कन्धरं द्रष्टुमवेक्ष्य शौरिम्
उत्कन्धरं दारुक इत्युवाच॥

एवं,

धूमाकारं दधति पुरः सौवर्णे
वर्णेनाग्नेः सदृशि तटे पश्यामी।
श्यामीभूताः कुसुमसमूहेऽलीनां
लीनामालीमिह तरवोबिभ्राणाः॥

इत्येवमादिभिर्बहुप्रकारैर्वैचित्र्यैरयमलंकारो बोद्धव्यः।

डलयोरैक्यमिच्छन्ति यमकादौ विचक्षणाः।
तथैव रलयोस्तद्वत् शषयोर्व्वबयोर्णनोः।
सविन्दुकाविन्दुकयोः सविसर्गाविसर्गयोः।
अग्रतः स्थितयोरेव परयोरिति निर्णयः॥

विचित्रोवर्णविन्यासश्चित्रम्॥ १६

वर्णविन्यासस्य वैचित्र्याच्च वर्णानां पद्माद्याकारहेतुतया निरोष्ठत्वादिना च। चित्रमलंकारः। पद्माद्याकारहेतुतया तावत्।

भासते प्रतिभासार रसा भाताहता विभा ।
भावितात्मा शुभा वादे देवाभा वत ते सभा ॥

एषोऽष्टदलपद्मबन्धः । दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टवर्णाः । विदिग्दलेषु त्वन्यथा । कर्णिकाक्षरन्तु श्लिष्टमेव । एवमन्यत्राप्यूह्यम् ।

काम कामसम श्रीमन्नम कामदमभ्रम ।
भीमक्षामतमस्तोम हे महामहिमद्रुम ॥

षोड़शदलपद्मबन्धोऽयम् ।

कमला कमलालम्बाऽस्त्वमला विमलालका ।
भामला बहुलानन्दा यमला बहुलानना ॥

( मुरजबन्धः )

मनोभवान्तको देवो भवन्तम्परिरक्षतु ।
महाभयान्तकृत् देयात् भवान्तररिसंक्षयम् ॥

( गोमूत्रिकाबन्धः )

कमलामलकान्ताभ लाभ भारततारक ।
मन्ता भव महेशस्यालिकावङ्गातु ते पुरी ॥

( मुद्गरबन्धः )

मनोरम मणिग्राम मर्त्यस्तोममवक्षम ।
महाराम महो भीम मत्तभाममहत्तम ॥

( पट्टिशबन्धः )

भमैतत् पद्यपञ्चकम् ।

मारारिशक्ररामेभमुखैरासाररंहसा ।
सारारब्धस्तवा नित्यं तदर्त्तिहरणक्षमा ॥

माता नतानां सङ्घट्टः श्रियां बाधितसंभ्रमा।
मान्याऽथ सीमा रामाणां शं मे दिश्यादुमाऽऽदिमा॥
(खड्गबन्धः)

मत्वा च न्द्रमसा यशोऽतिविमलं ते लोकका न्त च हे
सर्व्वे न्द्र भ्रियतेऽङ्ग एव विधिना दत्तः चमे श प्रभो।
तस्मात् का मसमापदं कविगिरां त्वं राजध र्मा श्रय
यश्मौक्यं मम भासतेऽत्र तदिदं हेतु विभो चिन्तय॥
(चक्रबन्धः)

राकापताविव भवत्यरसा विसारा
रासा विसारधरणीवमताममारा।
रामामतामरगणरसमाचदारा
रादाच्च मास रिपुपल्लवितापकारा॥
(शकटबन्धः)

ममैतौ श्लोकौ। एवमन्येऽप्यूहनीयाः। निरोष्ठ्यत्वादिना खल्वपि।

दधानैर्घनसादृश्यं लसदायसदंशनैः।
तत्र काञ्चनसच्छाया ससृजे तैः शराशनिः॥
(निरौष्ठ्यम्)

निपीड़नादिव मिथो दानतोयमनारतम्।
वपुषामदयापातादिभानामभितोऽगलत्॥
(असंयुक्ताक्षरम्)

आशा मे विपुला खात चकं भटिति साधय।
एषा क्वचिदघाफाण हे गूढ़ जड़नीरुठ॥
(असंयुक्तापुनरुक्ताक्षरम्)

ममेदं पद्यम्।

भूरिभिर्भारिभिर्भीरैर्भूभारैरभिरेभिरे ।
भेरीरेभिभिरभ्रामैरभीरुभिरिभैरिभाः ॥

( द्विव्यञ्जनम् )

तत ताते ततातीत तात तात तता तत ।
ततात तततेऽतात तताते तत तातिता ॥

( एकव्यञ्जनम् )

मानसार रसासार नरा पालपरावर ।
रवराप लपाराप रसा साररसा नमा ॥

( गतप्रत्यागतम् )

सारला विरसालाप माया नाल ललामभा ।
सास्तुताग नु मा पायादमा तानवरावत ॥
तव रावनता माद यापाभानुगतास्तु सा ।
भामला ललना यामा पलासार विलारसा ॥

( गतप्रत्यागताभ्यां श्लोकद्वयम् )

राजपुत्र नवारीणां जयलोभक्षयंकरी ।
पुलोमा रातु रायं वात्रभरा त्वावतु क्षत ॥

( अर्द्धभ्रमकम् )

रसामार रमासार साररसाक्ष क्षसाररसा ।
मासातिव वर्ते सामा रक्षवस्त्वस्त्वव क्षर ॥

( सर्व्वतोभद्रम् )

सर्मैते एकव्यञ्जनादयः श्लोकाः । अनयैव दिशा अपरेऽपि प्रकारा उन्नेयाः ।

अन्यथोक्तस्यान्यथायोजनं वक्रोक्तिः॥ १७

अर्थान्तरपरतयोक्तस्यार्थान्तरपरतया योजनं वक्रोक्तिरलंकारः। अन्यथोक्तस्यान्यथा योजनं च श्लेषेण काक्का च भवति।

श्लेषेण यथा।

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो-
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान्।
युक्तं किं हितकर्त्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः॥

अत्र योषितामित्यभिप्रायेणोक्तस्य नारीणामित्यस्य न अरीणामिति पदभङ्गेनान्यथा योजनम्। एवं, शत्रूणामित्यभिप्रायेणोक्तस्य वामानामित्यस्य योषितामित्यर्थपरतया योजनम्। तथा, दुर्ब्बलाभिप्रायेणोक्तस्य बलाभावप्रसिद्धात्मन इत्यस्य बलासुरविनाशकेन्द्रपरतया योजनमिति। काकूर्ध्वनेर्व्विकारः। तया खल्वपि।

शल्यमपि स्खलदन्तः सोढुं शक्येत हालाहलदिग्धम्।
धीरैर्न पुनरकारणकुपितखलालोकदुर्व्वचनम्॥

अत्र, धीरैर्धैर्य्यशालिभिस्तथाविधं शल्यमपि सोढुं शक्यं खलदुर्व्वचनन्तु नेति केनचिन्निषेधार्थे प्रयुक्तो नञ्, अपरेण यदि शल्यमपि सोढुं शक्यं तदा खलदुर्वचनं सोढुं न शक्यमपि तु शक्यमेवेति काक्का विध्यर्थे योजितः। अनयोः परोक्तस्यान्यथा योजनम्। स्वोक्तस्यान्यथा योजनमपि दृश्यते। यथा,

काले वारिधाराणामपतितया नैव शक्यते स्थातुम्।
उत्कण्ठिताऽसि तरले, नहि नहि सखि, पिच्छिलः पन्थाः॥

अत्रापतितयेति पतिं विनेत्यभिप्रायेणोक्तस्य पतनाभावेनेत्यन्यथा योजनम्। अत्र श्लेषेण। अन्यथाऽपि दृश्यते। उदाहरणम्।

> इह पुरोऽनिलकम्पितविग्रहा
> मिलति का न वनस्पतिना लता।
> अभिलषस्यपि पाणिनिपीड़नं
> न हि घनागमरीतिरुदाहृता॥

न चेयमपह्नुतिः। तस्या उपमानप्रतिषेधेनोपमेयस्थापनरूपत्वात्, इह त्वन्यथोक्तस्यान्यथायोजनकृतवैचित्र्यस्य स्फुटमुपलभ्यमानत्वात्। तदलमपूर्व्वापह्नुतिप्रकारकल्पनया।

## भिन्नानां शब्दानामभिन्नवदुच्चारणं श्लेषः॥ १८

नानार्थानां शब्दानामेकमात्रार्थे प्रकरणादिसत्त्वे यत्र प्रकरणादिसत्त्वं तस्यैवार्थस्याभिधया बोधः अर्थान्तरस्य तु व्यञ्जनया। यत्र त्वेकमात्रार्थे प्रकरणादिनियमो नास्ति, तत्र द्वयोरप्यर्थयोरभिधयैव बोधः, तत्रैव च श्लेषोऽलङ्कार इति वस्तुगतिः।

तत्रार्थभेदेन शब्दभेद इति दर्शने यावन्तोऽर्थास्तवन्त एव शब्दा भवन्ति। तथाचार्थद्वयप्रतीतिस्थले अर्थभेदात् एकाकारौ द्वौ शब्दाववश्यं वक्तव्यौ। उच्चारणन्तु तयोरेकेनैव प्रयत्नेन भवतीति तयोर्भेदो नोपलभ्यते। तथाचार्थभेदेन भाषाभेदेन वा भिन्नानामपि शब्दानामभिन्नवदुच्चारणं यत् युगपत् क्रियते, स श्लेषोनामालङ्कारः। यद्यप्यर्थभेदे क्वचित् क्वचित् समसादे-

भेदेन स्वरभेदादभिन्नवदुच्चारणं न सम्भवति, तथापि काव्यमार्गे स्वरो न गण्यते इति नयमाश्रित्येदमुक्तमिति बोध्यम्।

वर्णपदप्रकृतिप्रत्ययविभक्तिवचनलिङ्ग-
भाषाभेदादष्टविधः॥ १९

सोऽयं श्लेषः वर्णादिभेदादष्टविधो भवति। क्रमेणोदाहरणम्।

अलङ्कारः शङ्काकरनरकपालं परिजनो-
विशीर्णाङ्गो भृङ्गी वसु च वृष एकोबहुवयाः।
अवस्थेयं स्थाणोरपि भवति सर्व्वामरगुरो-
र्व्विधौ वक्रे मूर्द्ध्नि स्थितवति वयं के पुनरमी॥

अत्र विधाविति विधुविधिशब्दयोरुकारेकारयोर्वर्णयोः सप्तम्येकवचने औकाररूपत्वाद्वर्णश्लेषः।

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्॥

अत्र पृथूनि कार्त्तस्वरस्य पात्राणि यत्रेति पृथुकानामार्त्तस्वरस्य पात्रमिति चार्थभेदे विभक्तिसमासयोरपि भिन्नत्वात् पदश्लेषोऽयम्।

आत्मनश्च परेषां च प्रतापस्तव कीर्त्तिनुत्।
भयकृद्भूपते बाहुर्द्विषञ्च सुहृदां च ते॥

कीर्त्तिनुदित्यत्र नौतिनुदत्योर्भयकृदित्यत्र करोतिकृन्तत्योश्च क्विपि तुल्यं रूपमिति प्रकृतिश्लेषोऽयम्।

रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्तापूर्व्वसम्पत्सहस्रम्।
प्रमथनिवहमध्ये जातुचित् त्वत्प्रसादा-
दहमुचितरुतिः स्यान्नन्दिता सा तथा मे॥

अत्र नन्दितेति तृण्तलोः श्लेषात् प्रत्ययश्लेषोऽयम्। विभक्ति-श्लेषो द्विविधः; एकजातीयविभक्तिश्लेषो भिन्नजातीयविभक्ति-श्लेषश्च। तत्राद्यो यथोदाहृते अहमुचितरुचिः स्यान्नन्दितेत्यत्र स्यां स्यादित्युत्तमपुरुषप्रथमपुरुषैकवचनयोः श्लेषः। यथा वा,

त्वमेव धातुः पूर्व्वोऽसि त्वमेव प्रत्ययः परः।
अनाख्यातं न ते किञ्चित् नाथ, केनोपमीयसे॥

अत्र धातुरिति षष्ठीप्रथमयोः श्लेषः। द्वितीयः खल्वपि।

सर्व्वस्वं हर सर्व्वस्य त्वं भवच्छेदतत्पः।
नयोपकारसांमुख्यमायासि तनुवर्त्तनम्॥

अत्र हर इति पक्षे शिवसंबोधनमिति सुप्। पक्षे च हृधातोस्तिङ् इति भिन्नजातीयविभक्तिश्लेषोऽयम्। एवं भवेत्यादावपि।

भक्तिप्रह्वविलोकनप्रणयिणी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये।
लावण्यैकमहानिधीरसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्व्वा हरेः॥

अत्र प्रणयिणी इत्यादौ सर्व्वत्र सुब्द्विवचनैकवचनयोः, कुरुतामित्यत्र तिङ्द्विवचनैकवचनयोश्च श्लेषः। एष लिङ्ग-श्लेषोऽपि। प्रणयिणी इत्यादौ नपुंसकस्त्रीलिङ्गयोरैकरूप्यात्।

भाषाश्लेषो द्विविधः ; भाषाभेदेन भिन्नस्वरूपैः पदैरनेकार्थाभिधानम् । भाषाभेदेऽप्यभिन्नस्वरूपैः शब्दैरेकार्थाभिधानञ्च । आद्योयथा ।

महदेसुरसन्धम्मे तमवसमासङ्गमागमा हरणे ।
हरवहुसरणं तं चित्तमोहमवसरउमे सहसा ॥

अत्र संस्कृतप्राकृतयोः श्लेष इति केचित् । संस्कृतमहाराष्ट्र्योरित्यपरे । द्वितीयः खल्वपि ।

समरे भीमारम्भं विमलासु कलासु सुन्दरं सरसम् ।
सारं सभासु शूरिं तमहं सुरगुरुसमं वन्दे ॥

अयमेकत्रार्थे संस्कृतप्राकृतयोः श्लेषः ।

## भूयश्च सभङ्गाभङ्गभेदात् द्विविधः ॥ २०

पुनरपि श्लेषो द्विविधः सभङ्गश्लेषोऽभङ्गश्लेषश्च । उदाहरणम् ।

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो-
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्व्वदोमाधवः ॥

अत्र ध्वस्तमनोभवेनेत्यादौ सभङ्गः, अन्धकक्षयेत्यादावभङ्गः श्लेषः । यथा वा,

योऽसकृत् परगोत्राणां पक्षच्छेदक्षणक्षमः ।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥

इत्यलङ्कारसूत्रे शब्दालङ्कारनिरूपणपरिच्छेदः पञ्चः ।

( अर्थालङ्कारनिरूपणम् )

## साधर्म्यमुपमा ॥ १

उपमानोपमेययोरेव साधर्म्यं वैचित्र्यवत्र कार्य्यकारणयोरित्यु-पमानोपमेययोरेव समानधर्म्माभिसम्बन्ध उपमा । विभजते ।

## श्रौत्यार्थ्याक्षिप्ता च ॥ २

सेयमुपमा श्रौती आर्थी आक्षिप्ता चेति त्रिविधा ।

## श्रौतीवादेरार्थी तुल्यादेराक्षिप्ता परा ॥ ३

इवादिशब्दानामुपादाने श्रौती । तुल्यादिशब्दानामुपादाने आर्थी । द्वयोरभावे त्वाक्षिप्ता । इव वा यथादिशब्दानां साधर्म्यबोधकत्वात् साधर्म्यस्य चोपमारूपत्वात् तेषाञ्च श्रौचितेरनोपमानानन्तरस्थानत्वात् तत्सद्भावे उपमानोपमेयसाधर्म्याणां स्फुटमवगतेः श्रौती भवत्युपमा । तुल्यसदृशसमानादिशब्दानान्तु साधर्म्यवद्वस्तुबोधकत्वात् नास्ति साक्षादुपमाबोधकत्वम् । उपमानमुपमेयञ्च द्वयमपि भवति साधर्म्यवद्वस्त्विति तुल्यादिपदसद्भावे इदमुपमानमिदमुपमेयमिदं साधर्म्यमिति च न द्रागिव स्फुटतया प्रतीयते, अपित्वर्थानुसन्धानवशादेव तदवगतिरित्या-

थेव भवत्युपमा। तथाहि, कमलेन तुल्यं मुखमित्युपमेयएव, मुखेन तुल्यं कमलमित्युपमानएव, कमलं मुखञ्च तुल्यमित्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरुपलभ्यते। तदेवं साधर्म्यबोधकसद्भावे श्रौती धर्म्मिबोधकसद्भावे आर्थी। यत्र तु साधर्म्यबोधकमिवादिपदं धर्म्मिबोधकं तुल्यादिपदञ्च नोपादीयते भवति चोपमाप्रतीतिः, तत्रोपमा आक्षिप्तेत्युच्यते। क्रमेणोदाहरणम्।

आमन्त्राः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः।
भीता भर्त्तृकरावलम्बितकरास्त्वच्छत्रुनार्य्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव॥

यथा वा,

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा॥
अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वरो न कस्य॥
मन्थायस्तार्णवाम्भःप्लुतिकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्ज्जत्प्रलयघनघटाऽन्योन्यसंघट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताड़ितोऽयम्॥

अत्रेवादितुल्यादिपदविरहादुपमाप्रतीतेश्चाक्षिप्तैवोपमा। यथा वा,

राकानिशाकरो योषिन्मुखेन मधुगन्धिना।
विजितो लज्जितः सूरमण्डलायाभिधावति॥

इदं मम। अथेदानीं प्रकारान्तरेणोपमाभेदमाह।

## पूर्णा लुप्ता च ॥ ४

उपमा इतीव ।

## समस्तोपादाने पूर्णा विपरीता लुप्ता ॥ ५

उपमानं उपमेयं साधारणोधर्म्मः उपमाबोधकपदमितेतान्य- पमायामपेक्षितानि । एतेषां सर्व्वेषामुपादाने पूर्णा भवत्युपमा । एतेषामेकस्य द्वयोस्त्रयाणां वाऽनुपादाने लुप्ते त्युच्यते । क्रमेणो- दाहरणम् ।

अत्यायतैर्नियमकारिभिरुद्धतानां
दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो-
लक्ष्मीविलासभवनैर्भुवनं बभार ॥

अत्रोपमानं भुजाः उपमेयमुपायाः साधारणधर्म्मो भुवन- भरणमुपमाबोधकमिवपदञ्चोपात्तम् । अत्र पूर्णा तावत् श्रौत्यार्थी- भेदात् द्विविधा सती समासगता वाक्यगता तद्धितगता चेति प्रत्येकं त्रिविधा भवन्ती षड्भेदाजायते । तत्रेवेन समासोविभक्त्य- लोप इति वार्त्तिकानुसारात्तु समासगतेयति प्राञ्चः । परमेवं- विधविभागे वैचित्र्यविशेषाप्रतीतेर्नैष विभाग इहादृतः । लुप्ता तावदनेकधा भिद्यते । तत्र धर्म्मलोपे यथा,

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।
करणीयं वचश्चेतः, सत्यं तस्यामृतं यथा ॥

अत्रामृतस्य वचसश्च साधारणोधर्म्मोमधुरत्वं नोपात्तम् । उपमानलोपे यथा,

सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य ।
दृश्यतेऽथ निशम्यते सदृशमंशांशमात्रेण ॥

अत्रास्मद्दर्शनश्रवणाविषयत्वेन दुर्लभतया उत्कृष्टगुणमस्मद्गोचरः किञ्चिदुपमानं भविष्यतीति सादृश्यपर्य्यवसानादुपमानलोपेयमुपमितुरुद्योतकरः । उपमाबोधकलोपे यथा,

असितभुजगभीषणासिपत्रो-
रुहरुहिकाहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः
प्रतिभटविक्रमदर्शनेऽयमासोत् ॥

यत्र वृत्तौ गतार्थतया उपमाबोधकं पदं न प्रयुज्यते, तत्रैवायं भेदः । आक्षिप्तोपमायां तु नैतदित्यनयोर्भेदः । साधारणधर्म्मोपमाबोधकयोर्लोपे यथा,

सविता विधवति विधुरपि
सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च
सुखदुःखवशीकृते मनसि ॥

उपमानसाधारणधर्म्मयोर्लोपे यथा,

दुण्दुनायमानोमरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमसदृशं भ्रमर, भ्रमन्नपि न प्राप्स्यसि ॥

उपमाबोधकोपमेययोर्लोपे यथा,

अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः ससहस्रायुधीयति ॥

अत्र ससहस्रायुधमिवात्मानमाचरतीत्युपमेयभूत आत्मा

स्तो गतार्थत्वात् नोपात्तः। उपमानसाधारणधर्म्मोपमाबोधकानामनुपादाने यथा,

तरुणिमनि कृतावलोकना
ललितविलासवितर्ध्वविग्रहा।
स्मरशरविसराचितान्तरा
मृगनयना हरति मुनेर्म्मनः॥

अत्र यदि मृगशब्देन लक्षणया तन्नयने विवक्ष्येते, तदा नेदमुदाहरणम्। मृगपदस्यैवोपमानबोधकस्य सत्त्वप्रसङ्गात्। यदा तु मृगस्य नयने इव चञ्चले नयने यस्या इत्यर्थो विवक्ष्यते, तदा सप्तम्युपमानेत्यादिना उपमानवाचिमृगनयनेति पूर्व्वपदे उत्तरपदभूतस्य नयनशब्दस्य लोपे उपमेयभूतस्य नयनमात्रस्योपादानात् इदमुदाहरणमिति काव्यप्रदीपः।

एकस्य बहूपमानसम्बन्धे मालोपमा॥ ६

एकस्योपमेयस्य बहूपमानसम्बन्धे मालोपमा। साधारणधर्म्मस्य भेदाभेदाभ्यां इयं द्विविधा। क्रमेणोदाहरणम्।

"ज्योत्स्नेव हृदयानन्दः सुरेव मदकारणम्।
प्रभुतेव समाकृष्टलोका कवयितुः कृतिः॥"

यथा वा,

कलेव चन्द्रस्य कलङ्कमुक्ता
मुक्तावलीवोरुगुणप्रपन्ना।
जगत्त्रयस्याभिमतं ददाना
महेश्वरी कल्पलतेव सेव्या॥

साधारणधर्म्मस्याभेदे त्वपि।

वारिजेनेव सरसी शशिनेव निशीथिनी ।
यौवनेनेव वनिता नयेन श्रीर्मनोहरा ॥

यथा वा, मम चन्द्रवंशे महाकाव्ये ।

मृगाधिराजस्य मृगैरिवान्यै-
स्तमोपहस्येव समस्तमोभिः ।
न विग्रहस्तस्य बभूव राज्ञो-
द्दृतैः प्रभावात् किल राजलोकैः ॥

## रशनोपमा यथोर्द्ध्वमुपमेयस्योपमानता चेत् ॥ ७

पूर्व्वपूर्व्वस्योपमेयस्योत्तरोत्तरमुपमानता चेत्, रशनोपमा नामाऽलङ्कारः । यथा,

चन्द्रायते शुक्लरुचाऽपि हंसो-
हंसायते चारुगतेन कान्ता ।
कान्तायते स्पर्शसुखेन वारि
वारीयते स्वच्छतया विहायः ॥

## एतेनापरे व्याख्याताः ॥ ८

एतेनोपमाभेदनिरूपणेनापरेऽप्युपमाभेदा व्याख्याता वेदितव्याः । तेषामप्युक्तभेदानतिक्रमात् वैचित्र्यविशेषानावहत्वाच्च । तत्र, बालव्युत्पत्त्यर्थं दण्ड्याचार्य्यप्रदर्शिताः कतिचिद्भेदा यथावदेवेह प्रदर्श्यन्ते ।

अम्भोरुहमिवाताम्रं मुग्धे करतलं तव ।
इति धर्म्मोपमा साक्षात्तुल्यधर्म्मप्रदर्शनात् ॥

राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव।
इयं प्रतीयमानैकधर्म्मा वस्तूपमैव सा॥
तवाननमिवोन्निद्रमरविन्दमभूदिति।
सा प्रसिद्धविपर्य्यासाद्विपर्य्यासोपमेष्यते॥

सोऽयं प्रकारः प्रतीपाख्योऽलङ्कार इति नव्या मन्यन्ते।

तवाननमिवाम्भोजमम्भोजमिव ते मुखम्॥
इत्यन्योन्योपमा सेयमन्योन्योत्कर्षशंसिनी॥

अयमपि प्रकार उपमेयोपमानामकोऽपर एवालङ्कार इति नव्याः।

त्वन्मुखं कमलेनैव तुल्यं नान्येन केनचित्।
इत्यन्यसाम्यव्यावृत्तेरियं सा नियमोपमा॥
पद्मं तावत्तवान्वेति मुखमन्यच्च तादृशम्।
अस्ति चेदस्तु तत्कारीत्यसावनियमोपमा॥
समुच्चयोपमाऽप्यस्ति न कान्त्यैव मुखं तव।
ह्लादनाख्येन चान्वेति कर्म्मणेन्दुमितीदृशी॥
त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः।
इयत्येव भिदा नान्येत्यसावतिशयोपमा।

प्रकारोऽयं नव्यानां व्यतिरेकप्रभेदेऽन्तर्भवति।

मय्येवास्या मुखश्रीरित्यलमिन्दो, विकत्थनैः।
पद्मेऽपि सा यदस्त्येवेत्यसावुत्प्रेक्षितोपमा॥
यदि किञ्चिद्भवेत् पद्मं सुभ्रु विभ्रान्तलोचनम्।
तत्ते मुखश्रियं धत्तामित्यसावद्भुतोपमा॥

अयञ्च प्रकारोऽतिशयोक्तिमध्ये परिगणितो नव्यैः।

अयमीत्युत्प्रेक्ष्य तन्वङ्गि, त्वन्मुखं त्वन्मुखाशया ।
इन्दुमप्यनुधावामीत्येषा मोहोपमा स्मृता ॥

प्रकारोऽयं नव्यनये भ्रान्तिमदलङ्कारप्रभेदो बोद्धव्यः ।

किं पद्ममन्तर्भ्रान्तालि किन्ते लोलेक्षणं मुखम् ।
मम दोलायते चित्तमितीयं संशयोपमा ॥

अयमेव संशयालङ्कार इति नव्याः ।

न पद्मस्येन्दुनिर्ग्राह्यस्येन्दुलज्जाकरी द्युतिः ।
अतस्त्वन्मुखमेवेदमित्यसौ निर्णयोपमा ॥

इमञ्च प्रकारं निश्चयाख्यमलङ्कारान्तरमाहुराधुनिकाः ।

शिशिरांशुप्रतिस्पर्द्धि श्रीमत् सुरभिगन्धि च ।
अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता ॥

सरूपशब्दवाच्यत्वात् सा समानोपमा यथा ।
बालेवोद्यानमालेयं सालकाननशोभिनी ॥

यद्यप्यनयोर्भेदयोः प्राय एकरूपतैवेत्येकेनापरस्य गतार्थत्वं, तथापि कथञ्चिद्भेदमुररीकृत्य शिष्यबुद्धिवैशद्याय प्रकारभेदो व्युत्पादित इति मन्तव्यम् ।

पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम् ।
समानमपि सोत्सेकमिति निन्दोपमा स्मृता ॥

प्रकारोऽयं नव्यनये व्यतिरेकप्रभेदएव पर्य्यवस्यति ।

ब्रह्मणोऽप्युद्भवः पद्मश्चन्द्रः शम्भुशिरोधृतः ।
तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमोच्यते ॥

पद्मेन त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः ।
स गुणो वाऽस्तु दोषोवेत्याचिख्यासोपमां विदुः ॥

चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः।
स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा॥
चन्द्रबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम्।
तव तन्वङ्गि, वदनमित्यसौ विक्रियोपमा॥
वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते।
एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा॥
त्वदाननमधीराक्षमाविर्दशनदीधिति।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम्॥
नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम्।
मया मधुव्रतेनेव पायं पायमरम्यत॥
अधिकेन समीकृत्य हीनमेकक्रियाविधौ।
यद्ब्रुवन्ति स्मृता सेयं तुल्ययोगोपमा, यथा॥
दिवो जागर्त्ति रक्षायै पुलोमारिर्भुवो भवान्।
असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः॥
कान्त्या चन्द्रमसन्धाम्ना सूर्य्यं धैर्य्येण चार्णवम्।
राजन्ननुकरोषीति सैषा हेतूपमा मता॥"

एवं रूपकभेदा अपि यथारूपमवगन्तव्याः। तत्रैकदेशविवर्त्तिन्युपमा यथा,

नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः।
पदे पदे विभान्ति स्म लावण्यैरिव वारिभिः॥

अत्रोत्पलादीनां नेत्रादिसादृश्यं साक्षादुपात्तं सरःश्रीणामङ्गनासादृश्यमर्थादवसीयते इत्येकदेशे विशेषेण वर्त्तनादेकदेशविवर्त्तिनीयमुपमा।

वामनेन तु लौकिकी कल्पिता चेत्युपमायाः द्वौ भेदौ प्रधानतः प्रदर्शितौ। तत्र धर्म्मलेशात् लोकप्रसिद्धयोरुपमानोपमेययोः साम्यं लौकिक्युपमा। यथा कमलमिव मुखमित्यादौ। अत्र हि कमलमुपमानं मुखमुपमेयमिति लोकप्रसिद्धयोरेवोपमानोपमेययोः साम्यमुपमायां परिगृह्यते। सत्यपि केनचिद्धर्म्मलेशेन कुमुदादीनां मुखस्य साम्ये न तयोरुपमानोपमेयभावो लोकप्रसिद्ध इति नोपादीयते। लोके उपमानोपमेयभावस्याप्रसिद्धावपि गुणबाहुल्यात् यत् कयोश्चिदुपमानोपमेयभावः कविभिः कल्प्यते, सेयं कल्पितेत्युच्यते। यथा,

इदानीं प्लक्षाणां जरठदलविश्लेषचतुरः
शिखानामाबन्धः स्फुरति शुकचञ्चूपुटनिभः।
ततः स्त्रीणां हन्त क्षममधरकान्तिं तुलयितुं
समन्तादुद्भाति स्फुटसुभगरागं किसलयम्॥

यथा वा,

उदर्भङ्गुरमणीरमणोपमर्द-
भुग्नोन्नतिस्तननिवेशनिभं हिमांशोः।
बिम्बं कठोरविसकान्तिकडारगौरै-
र्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति॥

एवं,

अभिनवकुशसूचीस्पर्द्धि कर्णे शिरीषम्।
सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गकम्॥

इत्यादयोऽप्युदाहार्य्याः। केचित्तु वैधर्म्म्यवत्योमप्युपमामाहुः। तत्रोदाहरणम्।

प्रहितः प्रधनाय माधवा-
नहमाकारयितुं महीभृता ।
न परेषु महौजसश्छला-
दपकुर्व्वन्ति मलिम्लुचा इव ॥"

अत्रोपमानेषु मलिम्लुचेषु छलापकरणमस्ति, उपमेयेषु महौजःसु तु तन्नास्तीति वैधर्म्म्यवतीयमुपमा ।

अत्र च साम्यनिर्व्वाहकोधर्म्मः क्वचिदेकरूपः । यथा कमलमिव मुखं मनोज्ञमित्यादौ । अन्यद्धि मनोज्ञत्वं कमलगतमन्यच्च मुखगतमिति सत्यपि भेदे तदुभयमेकरूपमेव । क्वचिच्च भिन्नयोरपि धर्म्मयोरेकधर्म्मवत्तया एकरूपयोः साम्यनिर्व्वाहकत्वम् । यथा,

भल्लापवर्ज्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥

अत्र हि श्मश्रूणां सरघानाञ्च कृष्णवर्णतयैकरूपाणां साम्यनिर्व्वाहकत्वम् । यानि पदान्युपमाबोधकतया कवयः प्रयुञ्जते, तानि पदान्याचार्य्यदण्डिप्रदर्शितान्येवेह प्रदर्श्यन्ते,—

इववद्वायथाशब्दाः समाननिभसन्निभाः ।
तुलासङ्काशनीकाशप्रकाशप्रतिरूपकाः ॥
प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः ।
सदृक्सदृशसंवादिसजातीयानुवादिनः ।
प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः ।
सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥

कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिधी अपि।
सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः।
समासश्च बहुव्रीहिः शशाङ्कवदनादिषु॥
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति।
विडम्बयति सन्धत्ते हसतीर्ष्यत्यसूयति।
तेन सार्द्धं विगृह्णाति तुलां तेनाधिरोहति।
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते॥
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति।
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः।

## एकस्योपमानोपमेयभावोऽनन्वयः॥ ९

सदृशवस्त्वन्तरव्यवच्छेदाय एकस्मिन् वाक्ये एकस्यैवोपमानोपमेयभावो यदुपनिबध्यते, सोऽयमुपनिबध्यमानोऽपि स्वस्योपमानोपमेयभावो नान्वेतीत्यन्वयोनामाऽलङ्कारः। उदाहरणम्।

जयत्यनादिर्भगवाननन्तः
स तावदुच्चैर्भगवानिवैकः।
सर्गस्थितिप्रत्यवहारदक्षा-
स्ते तद्विलासा इव तद्विलासाः॥

इदं मम। यथावा,

त्वद्विच्छेदात् कुसुमविशिखक्षुब्धमुग्धाङ्गनानां
चन्द्रः पूषा विषमिव मरुद्यामिनी कालरात्रिः
त्वय्यायाते स पुनरधुना हन्त सीमन्तिनीनां
चन्द्रश्चन्द्रो मरुदिव मरुद्यामिनी यामिनीव॥

नायं लाटानुप्रासः, तद्वैचित्र्यापेक्षया वैचित्र्यान्तरस्याच सत्त्वात्। चन्द्रः शशीव इत्यादिरीत्या शब्दभेदेनोपादानेऽपि तस्यानपायात्। किन्त्वत्रौचित्यात् स एव शब्दः प्रयुज्यते। यदाहुः,

अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम्।
अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम्॥

## पर्य्यायेण द्वयोरुपमेयोपमा॥ १०

द्वयोरुपमानोपमेययोर्वाक्यद्वये पर्य्यायेणोपमेयोपमानभाव-उपमेयोपमा। पूर्व्वस्मिन् वाक्ये उपात्तयोरुपमानोपमेययोः परस्मिन् वाक्ये उपमेयोपमानभावेनोपादानमस्यालङ्कारस्य विषयः। उदाहरणम्।

कमलेव मतिर्मतिरिव कमला
तनुरिव विभा विभेव तनुः।
धरणीव धृतिर्धृतिरिव धरणी
सततं विभाति बत यस्य तव॥

यथा वा,

गिरिरिव गजराजोऽयं
गजराज इवोच्चकैर्विभाति गिरिः।
निर्झर इव मदधारा
मदधारेवास्य निर्झरः स्रवति॥

## उपमानस्याधिक्षेप उपमेयभावो वा प्रतीपम् ॥ ११

उपमेयेनैवोपमानकार्य्यस्य सुनिर्व्वाहात् किमर्थमिदमित्युपमानं यदधिक्षिप्यते, यच्च प्रसिद्धस्योपमानस्योपमेयभावः कल्प्यते, तदुभयं प्रतीपं नाम। अधिक्षेपस्तिरस्कारः। क्रमेणोदाहरणम्।

लावण्यौकसि सप्रतापगरिमण्यग्रेसरी त्यागिनां
देव, त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥

यथा वा,

इन्द्रेण किं स यदि कर्णनरेन्द्रसूनु-
रैरावतेन किमहो यदि तद्द्विपेन्द्रः।
दम्भोलिनाऽप्यलमलं यदि तत्प्रतापः
स्वर्गोऽप्ययं ननु मुधा यदि तत्पुरी सा ॥

द्वितीयः खल्वपि।

शीतरश्मिरसि चन्द्रमः कथं
तापयस्यनलगर्भमयूखैः।
त्वां शरेण शतधा विभजेयं
जानकीमुखसमो यदि न स्याः ॥

एहि तावत् सुन्दरि, कर्णं दत्त्वा शृणुष्व वचनीयम्।
तव मुखेन कृशोदरि, चन्द्र उपमीयते जनेन ॥

तदोजसस्तद्यशसः स्थिताविमौ
वृथेति चित्ते कुरुते यदा यदा।
तनोति भानोः परिवेशकैतवात्
तदा विधिः कुण्डलनां विधोरपि॥

इत्यादिभङ्ग्यन्तरैरप्ययमलङ्कार उपनिबध्यते।

उक्तोत्कर्षातिशयस्योपमानभावोऽप्येकेषाम्॥ १२

कस्यचिदुत्कर्षातिशयं पूर्व्वमुक्ता परतस्तस्योपपानत्वकल्पनमपि प्रतीपमितेएकेषामाचार्य्याणामनुमतम्। उदाहरणम्।

अहमेव गुरुः सुदारुणाना-
मिति हालाहल तात, मास्म दृप्यः।
ननु सन्ति भवादृशानि भूयो-
भुवनेऽस्मिन् वचनानि दुर्ज्जनानाम्॥

इह खल्वसामान्यगुणयोगात् हालाहलस्योपमानभावोऽपि न समुचितः, तस्य तत्कल्पनमपि तत्प्रतिकूलतया प्रतीपमेव भवतीत्याशयः।

एकस्य सामान्यस्यानेकधोपादानं
प्रतिवस्तूपमा॥ १३

एकोऽपि साधारणोधर्म्मोऽनेकवारं यदुपादीयते, सा प्रतिवस्तूपमा नाम। अत्र खल्वनेकधोपादीयमानेनैकेन सासाम्येन वाक्यार्थयोर्वाक्यार्थानां वा उपमानोपमेयभावोऽवगम्यते। उदाहरणम्।

धन्यासि वैदर्भि, गुणैरुदारै-
र्यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकाया-
यदब्धिमप्युत्तरलीकरोति॥

अत्र समाकर्षणमुत्तरलीकरणञ्च फलत एकमेवेति यथोक्तोदाहरणम्। तयोर्भेदाभ्युपगमे तु नेदमुदाहरणम्। तथात्वे दृष्टान्तस्यैव लब्धावसरत्वात्। प्रकृतोदाहरणन्तु,

देवीभावं गमिता परिवारपदं कथं भजत्येषा।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम्॥

बहूनां वाक्यार्थानामुपमानोपमेयभावावगतौ मालारूपाऽप्येषा भवति। यथा,

विमल एव रविर्विशदः शशी
प्रकृतिशोभन एव हि दर्पणः।
शिवगिरिः शिवहाससहोदरः
सहजसुन्दर एव हि सज्जनः॥

यथा वा,

यदि दहत्यनलोऽत्र किमद्भुतं
यदि च गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः
प्रकृतिरेव सतामविषादिता॥

अत्र च कथितपदस्य दोषतया कीर्त्तनादेकस्य सामान्यस्यानेकत्र शब्दभेदेनोपादानमुचितं, न तु तदेव प्रयोजकमेकेनापि शब्देन तदुपादानदर्शनात्। यथा,

देवीं वाचमुपासते हि बहवः सारं हि सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टोमुरारिः कविः ।
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता—
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥

अत्र ह्युभयत्र जानातिनैव ज्ञानमुपात्तम् । न चाचेतने मन्थाचले ज्ञानसंबन्धः कथमिति वाच्यं, तस्यातिशयोक्तिरूपत्वात् । अविच्छेदेनाधःसंयोगस्त्वापातालनिमग्नपीवरतनुरित्यनेनैव लब्ध इति न पुनर्जानातिनाऽप्युपादानमर्हति । एतत् सर्वं साधर्म्येणोदाहरणम् । वैधर्म्येणापि खल्वेषा दृश्यते । यथा—

चकोर्य्यएव चतुराश्चन्द्रिकापानकर्म्मणि ।
विनाऽवन्तीर्न निपुणाः सुदृशोरतनर्म्मणि ॥

## दृष्टान्तस्त्वनेकस्य ॥ १४

अनेकस्य साधारणधर्म्मस्यानेकस्मिन् वाक्ये यदुपादानं क्रियते, स दृष्टान्तोनामालङ्कारः । अत्र प्रतिवाक्यं साधारणधर्म्मस्य भेदेऽपि तेषां समानधर्म्मवत्त्वेनैकरूपततया वाक्यार्थसाम्यनिर्व्वाहकत्वमवगन्तव्यम् । अयमपि साधर्म्यवैधर्म्याभ्यां द्विधा भिद्यते । क्रमेणोदाहरणम् ।

अविदितगुणाऽपि सत्कवि-
भणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलाऽपि हि
हरति दृशं मालतीमाला ॥

अत्र कर्णेषु मधुधारावमनं दृष्टान्तोदाहरणञ्च समान एव धर्मोऽत्र लोक एव।

तवाहवे साहसकर्मशर्मणः
करं कृपाणान्तिकमानिनीषतः।
भटाः परेषां विशरारुतामगुः
दधत्यवाते स्थिरतां हि पांशवः॥

वाते तु स्थिरतां न दधतीति व्यतिरेकेण साम्यपर्य्यवसाना-द्यथोक्तोदाहरणत्वम्।

त्वन्नियोगः परेणापि महिम्ना न महात्मनाम्।
पूर्णचन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः॥

इत्यत्र दृष्टान्तशब्दोपादानेऽपि नायमलङ्कारः। किन्त्वर्थान्तरन्यास एवेत्युपरिष्टान्निवेदयिष्यामः। प्रत्युत दृष्टान्तालंकारे दृष्टान्तशब्दप्रयोगोऽसङ्गत एव। तस्यार्थादेवावगतेः पुनरुक्तिप्रसङ्गात्। एवं निदर्शनालङ्कारे निदर्शनशब्दप्रयोगोऽपि न करणीयः।

## वस्तुसम्बन्धादुपमाऽवगमो निदर्शना॥ १५

कस्माच्चिद्वस्तुसम्बन्धात् कयोश्चिदुपमा यदवगम्यते, सेऽयं निदर्शना। वस्तुसम्बन्धश्च द्विविधः सम्भवन् असम्भवन् वा। क्रमेणोदाहरणम्।

उन्नतं पदमवाप्य योलघु—
हेलयैव स पतेदिति ब्रुवन्।

शैलशेखरगतोदृषत्कण—
श्चारुमारुतधुतः पतत्यधः ॥

अत्र शैलशेखरगतस्याधःपततोलघोर्दृषत्कणस्येदृशार्थप्रज्ञापणसम्बन्धः सम्भवत्येव । तथाविधं दृषत्कणं पश्यतस्तादृशबोधोत्पत्तेरुपलम्भात् । तस्माच्च सम्बन्धात् शैलशेखरगतस्याधःपततो लघोर्दृषत्कणस्य उन्नतपदमारूढस्य पततोलघोस्त्वोपमाऽवगम्यते इति सहृदयानुभव एवाऽत्र प्रमाणम् ।

नचेयं प्रतिवस्तूपमा । तत्र हि सिद्धेषु वस्तुष्ववगतस्य सामान्यस्यैकस्य पृथक् पृथगुपादानम् । इह त्वसिद्धस्य वस्तुनोवस्त्वन्तरनिदर्शनेन प्रज्ञापनमिति द्वयोर्भेदात् । स पतेदिति ब्रुवन्नधःपततीति हेतुहेतुमद्भावावगतेः प्रतिवस्तूपमापेक्षया वैचित्र्यान्तरस्याऽत्र स्फुटत्वाच्च । तत्र वाक्यभेदः अत्र तु न तथेत्येतावतापि भिद्यतेऽयमलंकारः । अपरे त्वाहुः । सोऽयं निदर्शनाप्रकारोनियमेन हेतुहेतुमद्भावावगमकतया वस्तुसम्बन्धात् पृथगेव, वस्तुसम्बन्धस्त्वसम्भवन्नेव निदर्शनां प्रयोजयतीति । असम्भवन् खल्वपि ।

इदं किलाव्याजमनोहरं वपु—
स्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्त्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥

अत्र वाक्यस्याऽसम्बद्धार्थकत्वं मा भूदिति अस्य मनोहरस्य वपुषस्तपःक्षमत्वसाधनेच्छा नीलोत्पलपत्त्रधारया शमीलताच्छेदनेच्छेवेत्युपमा प्रतीयते । यथा वा,—

उदयति विततोर्द्ध्वरश्मिरज्जा—
वहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा
द्वयपरिवारितवारणेन्द्रलीलाम् ॥

अत्र कथमन्यस्य लीलामन्योवहत्विति तत्सदृशीमित्यवगम्यते । यथा वा,—

मया मृगान् हन्तुरनेन हेतुना
विरुद्धमाक्षेपवचस्तितिक्षितम् ।
शरार्थमेवेत्यथ लम्भते गतिं
शिरोमणिं दृष्टिविषाज्जिघृक्षतः ॥

अत्रापि कथमन्यस्य गतिमन्योलभतामित्यतस्तत्सदृशीमिति पर्य्यवस्यति । एवं,

जन्मेदं बन्ध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥
प्रकृतैरवोत्तरङ्गस्य झञ्झावातोऽयमम्बुधेः ।
नियोजितात्मा यद्भूयः स वशी परमात्मनि ॥

इत्यादिभङ्ग्यन्तरेणाप्ययमलङ्कारोनिबध्यते । इदं मम । मालारूपाऽपि निदर्शना दृश्यते । यथा,

अरण्यरुदितं कृतं शवशरीरमुद्वर्त्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतो
धृतोऽन्धमुखदर्पणो यदबुधोजनः सेवितः ॥

अत्राबुधजनसेवा अरण्यरुदितादितुल्येति पर्य्यवसानाद्‌-यथोक्तोदाहरणम्। यथा वा,—

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्ग-
मादातुमिच्छति करे हरिणाङ्कविम्बम्।
मेरुं लिलङ्घयिषति ध्रुवमेष देव,
यस्ते गुणान् गदितुमुद्यममादधाति॥

अत्रापि दोर्भ्यां सागरतरणेच्छादिवत्त्वद्‌गुणकथनोद्यम इत्युप-मायां पर्य्यवस्यति।

अथवा मृदुवस्तु हिंसितुं
मृदुनैवारभते प्रजान्तकः।
हिमसेकविपत्तिरत्र मे
नलिनी पूर्व्वनिदर्शनं मता॥

इत्यादौ निदर्शनशब्दप्रयोगेऽपि नायमलङ्कारः, किन्त्वर्था-न्तरन्यास एव। वाक्यार्थयोः सामान्यविशेषभावेन तस्यैवाऽत्र लब्धप्रसरत्वात्। निदर्शनायान्त्ववान्तरवाक्यभेदेऽपि महावाक्य-स्यैकत्वात्। अतएव दृष्टान्तादपि अस्या भेदः। एवं प्रतिवस्तूप-माया अपि। अरण्यरुदितं कृतमित्यादावप्येकमेव महावाक्यम्। यदबुधो जनः सेवित इत्युत्तरवाक्ये यच्छब्दोपादानात् पूर्व्ववाक्येषु तच्छब्दस्यार्थत्वाद्वाक्यैकत्वावगतेः।

जन्मेदं बन्ध्यतां नीतमित्यादावपि काचमूल्येन मया चिन्ता-मणिर्व्विक्रीत इत्युत्तरत्रोपादानात्तस्यासम्बद्धार्थत्वपरिहाराय पूर्व्वोत्तरवाक्ययोरुद्देश्यविधेयभावस्याभ्युपगन्तव्यतया भोगलिप्सया जन्मनो व्यर्थतानयनं यत्, तत् काचमूल्येन चिन्तामणिर्व्विक्रय-

इत्यवगतेस्तत्राप्यसम्बद्धतयोपमायां पर्य्यवसानमिति वाक्यैकवाक्यमास्थेयम्। अथवा, भोगलिप्सया जन्मनोऽव्यर्थतानयनं काचमूल्येन चिन्तामणेर्विक्रय इवेति पर्य्यवसानाद्वाक्यैकवाक्यमस्त्येवेत्यनुसन्धेयम्। इह विम्बप्रतिविम्बभावमन्तरेण वाक्यार्थो न पर्य्यवस्यति, तमादायैव वाक्यार्थपर्य्यवसानात्। दृष्टान्ते तु वाक्यभेदस्य स्फुटतया स्वेन स्वेन रूपेण पर्य्यवसितानां वाक्यार्थानामुत्तरकालं विम्बप्रतिविम्बभावोऽवगम्यते, इत्ययमपि दृष्टान्त निदर्शनयोर्भेदोऽवगन्तव्यः।

उदयन्नेव सविता पद्मेष्वर्पयति श्रियम्।
विभावयन् समृद्धीनां फलं सुहृदनुग्रहम्॥

इत्यादयोभङ्गयोऽपि प्रथमप्रकारायां निदर्शनायामेवाभिनिविशन्ते।

## उपमानोपमेययोर्वैधर्म्योक्तिर्व्यतिरेकः॥ १६

साधर्म्यवतोरेव सतोर्यद्वैधर्म्यमुच्यते, स व्यतिरेकः। सोऽयं त्रिधा भिद्यते, उपमेयस्याधिक्यपर्य्यवसायी, न्यूनतापर्य्यवसायी, अनुभयपर्य्यवसायी च। क्रमेणोदाहरणम्।

पल्लवतः कल्पतरोरेष विशेषः करस्य ते देव।
भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते॥

अत्र करस्य कल्पतरुपल्लवादाधिक्यं कर्णतिरस्कारित्वात्। कर्णशब्दः श्लिष्टः। न्यूनतापर्य्यवसायी यथा,—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियायागुणैः
त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्तास्तथा मामपि।

कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्व्वं तुल्यमशोक, केवलमहं धात्रा सशोकः कृतः ॥

अत्र सशोकत्वेन न्यूनत्वम् । अत्रापि रक्तशिलीमुखशब्दौ श्लिष्टौ । यथा वा,—

स्वनाम किन्नाम मुधाऽभ्यधामहं
महेन्द्रकार्य्यं महदेतदुज्झितम् ।
हनूमदाद्यैर्यशसा मया पुन-
र्द्विषां हसैर्दूतपथः सितीकृतः ॥

यथा वा,—

अवदातत्वमहिंसा
द्विजत्वमित्यावयोः समाधर्म्माः ।
विरहाकुलितोऽस्मि सखे,
दयितायास्त्वं पुनर्मा भूः ॥

इदं मम । एषूदाहरणेषु उपमानादुपमेयस्य न्यूनतायामपि वैचित्र्यविशेषः सहृदयसंवेद्यः । वैचित्र्यञ्चालङ्कारः । न ह्यत्रोपमेयस्याधिक्यमस्ति । न चात्मावमाननाधिक्यमत्र विवि-क्षितम् । तस्याव्यङ्ग्यत्वेनाशाब्दत्वात् । न खल्वेषाऽत्रालङ्कार-भूमिः । न चावमानना उपमानभूता वर्त्तते, यदपेक्षया उपमेयभूता आत्मावमानना स्यादधिका च । तृतीयः खल्वपि ।

दृढतरनिबद्धमुष्टेः कोशनिषसस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥

अत्रापि मुष्ट्यादयः शब्दाः श्लिष्टाः । उपमानगतापकर्षकार-

णस्य उपमेयगतोत्कर्षकारणस्य च पर्य्यायेण युगपद्वोक्त्यनुक्तिभ्यां भूयस्यैषोऽलङ्कारो बहुधा भिद्यते। दिङ्मात्रमुदाह्रियते।

अकलङ्कं मुखं तस्या न कलङ्कि विधूपमम्।

अत्र विधौ कलङ्कित्वमपकर्षकारणं मुखे चाकलङ्कित्वमुत्कर्षकारणमुपात्तम्। अनयैव दिशाऽन्यत्राप्युदाहार्य्यम्। एवं न्यूनतापर्य्यवसायित्वेऽपि उपमानगतोत्कर्षकारणस्य उपमेयगतापकर्षकारणस्य च पर्य्यायेण युगपद्वा उक्त्यनुक्तिभ्यां भेदा ऊहनीयाः।

हरवन्न विषमदृष्टिर्हरिवन्न विभो, विधूतविततवृषः।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि॥

इति मालाव्यतिरेकोऽपि द्रष्टव्यः। अत्रापि विषमवृषकरशब्दाः श्लिष्टाः।

## द्वयोरभेदारोपो रूपकम्॥ १७

द्वयोरर्थादुपमानोपमेययोरनपह्नुतभेदयोरेव यदभेद आरोप्यते, तद्रूपकं नाम। द्वयोरिति कुर्व्वन् अतिशयोक्तिमपह्नुतिञ्च व्यवच्छिनत्ति। तत्र ह्यन्यत्रोपमेयनिगरणेनापरत्र तदपह्नवेनोपमानमेव ख्याप्यते। न चातिशयोक्तावनपह्नुतभेदे उपमानोपमेये भवतः। एवमन्यत्रापि। आरोपपदेन बुद्धिपूर्व्वकत्वं प्रज्ञापयन् भ्रान्तिमन्तं व्यावर्त्तयति। न हि तत्रापि उपमानोपमेययोर्भेदो भवति। विभजते।

साङ्गं निरङ्गं परम्परितञ्च॥ १८

रूपकमित्यनुवर्त्तते। तदेतद्रूपकं त्रिधा भिद्यते, साङ्गं, निरङ्गं, परम्परितञ्चेति। तत्र,

अङ्गैरङ्गिनोरूपणं द्विविधं साङ्गं समस्तवस्तु-विषयैकदेशविवर्त्तिभेदात्॥ १९

सहैवाङ्गैरङ्गी यद्रूप्यते, तत् साङ्गं नाम रूपकम्। तदपि द्विधा भिद्यते, समस्तवस्तुविषयस्यैकदेशविवर्त्तिनश्च रूपकस्य परस्परं भेदात्। तत्रैकं तावत्, समस्तानि वस्तून्यारोप्यमाणानि विषयः शब्दगोचरोऽस्येति समस्तवस्तुविषयम्। यत्र सर्व्वाण्यारोप्यमाणानि शब्दैरेव निवेद्यन्ते, तत्रायं भेदः। यत्र पुनः किञ्चिदारोप्यमाणं शब्देनोच्यते किञ्चिच्चार्थादवगम्यते, तदिदमेकदेशे विशेषेण वर्त्तनादेकदेशविवर्त्तीत्युच्यते। उपमानोपमेययोरभेदारोपेऽपि परमार्थत उपमानस्यैवोपमेयेऽभेदः पर्य्यवस्यति। तदिदमुपमेयमारोपविषय इत्युच्यते। तत्र ह्युपमानमारोप्यते। यच्चारोप्यते तदिदमुपमानमारोप्यमाणमित्याख्यायते। क्रमेणोदाहरणम्।

कीर्णान्धकारालकशालमाना
निबद्धतारास्थिमणिः कुतोऽपि।
निशा पिशाची व्यचरद्दधाना
महान्त्युलूकध्वनिफूत्कृतानि॥

अत्र निशायाः पिशाचीत्ववत्तदङ्गान्यपि रूपितानि। यथा वा,

संसार एष कूपः सलिलानि विपत्तिजन्मदुःखानि।
इह धर्म्म एव रज्जुस्तस्मादुद्धरति निर्म्मग्नान्॥

एकदेशविवर्त्ति खल्वपि।

यस्य रणान्तःपुरे करे कुर्व्वाणस्य मण्डलाग्रलताम्।
रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥

अत्र रणे अन्तःपुरत्वमात्रारोपस्य शब्दोपात्तत्वेऽपि मण्डलाग्रलतायानायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वमर्थादवगम्यते इति यथोक्तोदाहरणम्। यथा वा,

प्रौढमौक्तिकरुचः पयोमुचां
विन्दवः कुटजपुष्पबन्धवः।
विद्युतां नभसि नाट्यमण्डले
कुर्व्वते स्म कुसुमाञ्जलिश्रियम्॥

अत्र नभसो नाट्यमण्डलत्वरूपणेन शब्दोपात्तेनार्थात् विद्युतां नर्त्तकीत्वरूपणमवगम्यते।

## विपरीतं निरंगं केवलं मालारूपञ्च॥ २०

साङ्गविपरीतं निरङ्गं, यत्राङ्गानामारोपमनपेक्ष्यैव यत्किञ्चित् कुत्रचिदारोप्यते। तदपि द्विधा भिद्यते, केवलं मालारूपञ्चेति। क्रमेणोदाहरणम्।

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।

अनिद्रं यश्चान्तः स्वपिति तदहो वेद्मप्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्॥

यद्यपि प्रेम्णि लतिकात्वारोपस्य शाब्दत्वेऽपि सामर्थ्यान्मनसिजे वनपालत्वारोपोऽवगम्यते इत्येकदेशविवर्त्तिरूपकमिवेदं भवितुमर्हति, तथापि द्रागित्येव तदनवगतेरनादृत्यैव तत् प्राचां रीत्यैतदुदाहृतम्। पूर्व्वेषां खल्वेतन्निरङ्गस्योदाहरणम्। यथा वा,

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वाः
वादद्यूतं चिरतरमभूत् सिद्धयूनोः कयोश्चित्।
एकोवक्ति प्रथमनिहतं कैटभं कंसमन्यः
स त्वं तत्त्वं कथय भवता कोहतस्तत्र पूर्व्वम्॥

अत्र स कंसकैटभयोर्निहन्ता त्वमिति वर्णनीये राज्ञि भगवदभेदारोपः। यथा वा,

नीचोऽपि मन्दमतिरप्यकुलोद्भवोऽपि
भीरुः शठोऽपि चपलोऽपि निरुद्यमोऽपि।
त्वत्पादपद्मयुगले भुवि सुप्रसन्ने
संदृश्यते ननु सुरैरपि गौरवेण॥

अत्र सुप्रसन्नत्वं धर्म्मो गौणवृत्त्या पद्मएव सङ्गच्छते इति रूपकपरिग्रह एवात्र साधीयानिति यथोक्तोदाहरणमित्याहुः। यथा वा,

कः पूरयेदशेषान् कामानुपशमितसकलसन्तापः।
अखिलार्थिनां यदि त्वं न स्याः कल्पद्रुमो राजन्॥

मालारूपं खल्वपि।

कुसुमायुधपरमास्त्रं लावण्यमहोदधिर्गुणनिधानम् ।
आनन्दमन्दिरमहो हृदि दयिता खलति मे शल्यम् ॥

अत्रैकस्यां दयितायां कुसुमायुधपरमास्त्राद्यनेकाभेदारोपः । यथा वा,

सौन्दर्य्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्म्मणकर्म्म नर्म्मवचसामुल्लासनावासभूः ।
विद्या वक्रगिरां विधेरनवधि प्रावीण्यसाक्षात्क्रिया
बाणाः पञ्चशिलीमुखस्य ललनाचूड़ामणिः सा प्रिया ॥
किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्य्योषितां मदनः ॥

इत्यादि रशनारूपकमपि रुद्रटादिभिः प्राचीनतरैरङ्गीकृतम् । न च, पूर्व्वत्रारोप्यमाणानामुत्तरत्रारोपविषयीकरणे तदुत्कर्षस्थगणेन न वैचित्र्यवदेतदिति वाच्यम् । उपमेयोपमायामिवात्रापि वैचित्र्यविशेषस्य सहृदयहृदयसंवेद्यत्वात् । उपमाभेदानामत्रापि यथासम्भवमादर्तुमुचितत्वाच्च । मम्मटादिभिस्तु न वैचित्र्यवदिति कृत्वोपेक्षितमेतत् ।

## अन्यारोपनिमित्तोऽन्यारोपश्चतुर्व्विधं परम्परितम् ॥ २१

अन्ययोर्ययोः कयोश्चिदभेदारोपोनिमित्तं यस्य, तथाविधोयोऽयमपरयोरभेदारोपस्तत् परम्परितं नाम रूपकम् । एतदुक्तं भवति, यत्रैक आरोपः अपरारोपे निमित्तभावं प्रतिपद्यते, तत् खलु परम्परितमिति । तच्च परम्परितं प्रथमं तावत् द्विधा

भिद्यते, श्लिष्टशब्दमूलं तद्विपरीतश्चेति। एतदपि भेदद्वयं प्रत्येकं केवलं मालारूपञ्चेति मिलित्वा चत्वारो भेदाः सम्पद्यन्ते परम्परितस्य। क्रमेणोदाहरणम्।

अलौकिकमहालोकप्रकाशितजगत्त्रय।
स्तूयते देव, सद्वंशमुक्तारत्नं न कैर्भवान्॥

अत्र, सद्वंशः सदन्वयएव सद्वंशः सद्वेणुरित्यारोपो-वर्णनीये राज्ञि मुक्तारत्नारोपनिमित्तं वंशेति श्लिष्टशब्दमूलञ्च। यथेष्टं वा निमित्तनैमित्तिकभावः। एवं परत्रापि।

विद्वन्मानसहंस, वैरिकमलासङ्कोचदीप्तद्युते,
दुर्गामार्गणनीललोहित, समित्स्वीकारवैश्वानर।
सत्यप्रीतिविधानदक्ष, विजयप्राग्भावभीम, प्रभो,
साम्राज्यं वरवीर, वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥

अत्र, विदुषां मानसं मन एव मानसं सरोविशेष इत्यारोप-निमित्तोवर्णनीये राज्ञि हंसत्वारोपः। मनःसरसोर्मानसपदेना-भिधानात् श्लेषमूलश्च। एवमन्यत्रापि। तत्र च, कमलायाः सङ्कोच एव कमलानामसङ्कोचो विकाशः। दुर्गाणाममार्गण-मेव दुर्गाया मार्गणम्। समितां स्वीकारएव समिधां स्वीकारः। सत्ये प्रीतिरेव सत्यामप्रीतिः। विजयः परपराजयएव विजयोऽर्जुनः। अश्लिष्टशब्दमूलं यथा,

निरवधि च निराश्रयञ्च यस्य
स्थितमनिवर्त्तितकौतुकप्रपञ्चम्।
प्रथम इव भवान् स कूर्म्ममूर्त्ति-
र्जयति चतुर्द्दशलोकवल्लिकन्दः॥

अत्र खल्वारोपविषयो लोकशब्देनारोप्यमाणं च वह्निशब्देनोपात्तम्। मालारूपं खल्वपि।

पर्य्यङ्को राज्यलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गः
संग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः।
भग्नप्रत्यर्थिवंशोल्वणविजयकरिस्त्यानदानाम्बुपट्टः
खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य॥

यथा वा,

आलानं जयकुञ्जरस्य दृषदां सेतुर्व्विपद्वारिधेः
पूर्व्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।
संग्रामामृतसागरप्रमथनक्रीड़ाविधौ मन्दरः
राजन्, राजति वीर, वैरिवनितावैधव्यदस्ते भुजः॥

यद्यपि विद्युतां नभसि नाट्यमण्डले इत्यादेरेकदेशविवर्त्तिरूपकपरम्परितरूपकयोरेकरूपतया भेदद्वयवर्णनमनुचितम्; तत्रापि नभसि नाट्यमण्डलत्वारोपादेव विद्युतां नर्त्तकीत्वारोपावगतेः। न हि तत्रापि स्फुटसादृश्यमस्तीति शक्यते वक्तुम्। तथापि, अन्यारोपस्य वाच्यप्रतीयमानत्वाभ्यामेतद्भेदद्वयोपवर्णनमाचार्य्याणाम्। तदेवमष्टौ रूपकभेदा मम्मटभट्टादिभिर्लक्षिताः।

मुखं राकाचन्द्रः स खलु न कलङ्काङ्किततनु-
र्दृशौ पद्मप्राये समदिननिशीथं विकसिते।
मृणालाभौ बाहू प्रकृतिसुभगस्निग्धमधुरौ
वपुः कान्तं तस्याः कुसुमसुकुमारं मृगदृशः॥

इदं मम । तदेवमादौ अधिकारूढ़वैशिष्ट्यनामकं भेदान्तरमाहुर्नवीनाः । वस्तुतस्त्वत्र व्यतिरेकोपमावत् व्यतिरेकरूपकमेवालङ्कारः ।

इन्दोरपि मृगाक्षीणां मुखेन्दुरतिरिच्यते ।
निर्ज्जरैः पीयमानोऽपि यः कदाचिन्न क्षीयते ॥

इत्यादावप्युक्तैव गतिः । वैधर्म्म्येणापि परम्परितरूपकं दृश्यते । तत्र केवलं यथा ।

आहवक्षतोलोचनमार्गभाजो
रजोऽन्धकारस्य विजृम्भितस्य ।
शस्त्रक्षताश्वद्विपवीरजन्मा
बालारुणोऽभूद्रुधिरप्रवाहः ।

अत्रान्धकारेण बालारुणोविरुद्धते । यथा वा,

अक्षीणामितदाक्षाणां पदं धर्म्मनिकेतनम् ।
विलासतृष्णासारस्य ज्वलद्दावानलं वनम् ॥

मालारूपं यथापि—

सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्द्दशी सरलतायोगश्वपुच्छच्छटा ।
यैरेषाऽपि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत् कौशलम् ॥

एवमन्यत्राप्यूहनीयम् । अयमप्यलंकारो विषयस्याधिक्यपर्य्यवसायी, न्यूनतापर्य्यवसायी, अनुभयपर्य्यवसायी च । आधिक्यपर्य्यवसायी यथा,

त्वय्यागते किमिति वेपतएष सिन्धु-
स्त्वं सेतुमन्थकृदतः किमसौ बिभेति ।
द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽद्य
त्वां राजपुङ्गव, निषेवतएव लक्ष्मीः ॥

अथ त्वं सेतुमन्थकृदित्यनेन वर्णनीये राज्ञि नारायणाभेद-मारोप्य, प्रसिद्धनारायणस्य द्वीपान्तरस्थस्य दशकण्ठस्य वशीकरणार्थं सेतुबन्धनं लक्ष्मीप्राप्त्यर्थञ्च मन्थनमासीत् । वर्णनीयस्य तु राज्ञः द्वीपान्तरेऽपि जेतव्याभावेन प्राप्तलक्ष्मीकत्वेन च तस्मादाधिक्यमुक्तम् । न्यूनतापर्य्यवसायी यथा,

वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च ।
तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥

अत्र साक्षाद्भर्ग इत्यनेन विरक्ते भर्गाभेदमारोप्य नराकृतिरित्यनेन दिव्यमूर्त्तिवैकल्यप्रतिपादनात् न्यूनत्वम् । यथा वा,

वञ्चितश्चञ्चलापाङ्गि, लावण्यामृतधारया ।
दुनोति हृदयं साक्षादयं वदनचन्द्रमाः ॥

इदं मम । अत्र लावण्यवञ्चितत्वेन वदनस्य न्यूनत्वम् । अनुभयपर्य्यवसासी यथा । चन्द्रज्योत्स्नाधवलपुलिने इत्यादौ स त्वमित्यनेन वर्णनीये राज्ञि कंसकैटभनिहन्त्रभेदमात्रमारोपितं न तूत्कर्षोऽपकर्षो वा प्रतिपादितः । अथवा । मुखादौ चन्द्रादिरूपणं मुखादिकमुत्कर्षयदाधिक्यपर्य्यवसायि भवति ।

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितोनरपतिः पत्नी गृहीतव्रता ।

कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः॥

अत्र कौरव्येषु पशुत्वरूपणं तानपकर्षयन्न्यूनतापर्य्यवसायि भवति। अनुभयपर्य्यवसायि खल्वपि।

मुकुटांशुरञ्जितपरागमग्रतः
स न यावदाप शिरसा महीतलम्।
क्षितिपेन तावदनपेक्षितक्रमं
भुजपञ्जरेण रभसादगृह्यत॥

अत्र भुजयोः पञ्जरत्वरूपणं तयोरुत्कर्षमपकर्षं वा किमपि न करोति। वैयधिकरण्येनापि रूपकं दृश्यते। यथा—

द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्प-
श्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः।
द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकालस्य कुर्व्व-
न्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहक्षितीन्द्रः॥

अत्र फलत आरोप्यमाणानां पुष्पकेतुत्वादीनामारोपविषयस्य श्रीनृसिंहक्षितीन्द्रस्य च भिन्नविभक्तितया वैयधिकरण्यम्। यथा वा,

तारानायकशेखराय जगदाधाराय धाराधर-
च्छायाधारककन्धराय गिरिजासङ्गैकशृङ्गारिणे।
नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे
नागैः कंकणिने नगेन गृहिणे नाथाय सेयं नतिः॥

उत्तरार्द्धमुदाहरणम्। अयमलंकारो बहुभिर्भङ्गीभिरुपनिबध्यते। तत्र दिङ्मात्रमुदाह्रियते।

सेतुः शैलैस्त्वया बद्धः पूर्व्वं जेतुं दशाननम्।
कं जेतुमद्य बध्नासि यशश्चन्द्रोपलैः प्रभो॥
चिराद् यत् कौतुकाविष्ट' कल्पवृक्षमुदीक्षितुम्।
तन्मे सफलमद्यासीन्नेत्रं त्वय्यवलोकिते॥

तदेवं कतिचन प्रसिद्धा भेदाः प्रदर्शिताः। उपमारूपकयो-रन्तर्गणिकभेदस्त्वसंख्यत्वादुक्तभेदानतिक्रामाच्चोपेक्षितः। यदाहुः

"अपर्य्यन्तो विकल्पानां रूपकोपमयोर्यतः।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम्॥" इति।

## विषयिणो विषयात्मतया परिणमनात्
## प्रस्तुतोपयोगः परिणामः॥ २२

यत्र खलु विषयी स्वतः प्रस्तुतकार्य्यायाघटमानः विषयात्म-तया परिणमन् प्रस्तुतकार्य्याय घटते, तत्र भवेत् परिणामो-नाम। रूपके विषयस्य विषय्यात्मतया परिणमनमिह तु विष-यिणो विषयात्मतयेत्यनयोर्भेदः। किञ्च रूपके विषयिणा विषयस्योपादेयत्वादिकमत्र तु तद्वैपरीत्यम्। सोऽयं सामाना-धिकरण्येन वैयधिकरण्येन च भवतीति द्विविधः। क्रमेणोदा-हरणम्।

तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनाऽसौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपहृतवानातरं नाविकाय॥
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं जगाम॥

अत्रातरोविषयी विषयभूतसौमित्रिमैत्र्यात्मना परिणमन् प्रस्तुतकार्य्याय गुहरूपनाविकस्यानमनाय उपयुज्यते।

पुन्नागजालकैर्हारान् काञ्ची: केसरदामभि:।
कर्णिका: कर्णिकारैश्च विहर्त्तुं विदधुर्वने॥

अत्र विषयिणो हारादय: विषयभूतपुन्नागजालकादिना परिणमन्तो वनविहारायोपयुज्यन्ते। यथावा,

स्मितेनोपायनं दूरादागतस्य कृतं मम।
स्तनोपपीड़माश्लेषस्ततोद्यूते पणस्तया॥

अत्र विषयिणावुपायनपणौ विषयभूतस्मिताश्लेषात्मना परिणमन्तौ नायकसम्भावनादावुपयुज्येते। पूर्व्वार्द्धे वैयधिकरण्येन, परार्द्धे सामानाधिकरण्येनेति विशेष:।

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्ग:।
व्यालम्बेथा: सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्त्या भुवि परिणतां रन्तिदेवस्य कीर्त्तिम्॥

इत्यत्र विषयिण्या: कीर्त्तेर्व्विषयभूतस्रोतोमूर्त्त्या परिणमनेऽपि प्रस्तुतोपयोगाभावान्नायमलङ्कार:॥

## उपमेयप्रतिषेधेनोपमानस्थापनमपह्नुति:॥ २३

उपमेयं प्रतिषिध्य यदुपमानतया तस्य स्थापनं सेयमपह्नुति:। उपमेयप्रतिषेधश्च क्वचिच्छब्दत: क्वचिदर्थत:। क्रमेणोदाहरणम्।

नेदं नभोमण्डलमम्बुराशि-
नैताश्च तारा नवफेनभङ्गाः।
नायं शशी कुण्डलितः फणीन्द्रो-
नायं कलङ्कः शयितो मुरारिः॥

यथावा,

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढ़मुरसि॥

अर्थतस्तु प्रतिषेधोवक्त्रोभिर्भङ्गीभिरुपनिबध्यते। यथा,

अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन् परे।
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत् सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे॥

अत्राङ्कादीनां प्रतिषेधः तेषां परपक्षतयोपन्यासादर्थसिद्धः।

यथा वा,

मन्थानभूमिधरमूलशिलासहस्र-
सङ्घट्टनव्रणकिणः स्फुरतीन्दुमध्ये।
छायामृगः शशक इत्यतिपामरोक्ति-
र्लोके गतानुगतिकः प्रथितः प्रवादः॥

अत्र पामरोक्त्युपन्यासेन छायादीनां प्रतिषेधोऽवगम्यते। इत्थं वा,

अमुष्मिन् लावण्यामृतसरसि नूनं मृगदृशः
स्मरः सर्व्वप्लुष्टः पृथुजघनभागे निपतितः।

यदाङ्गाङ्गाराणां प्रथमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः॥

अत्र न रोमावलिः किन्तु धूमशिखेति प्रतीयते। इत्थं वा,

वत सखि, कियदेतत् पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् कामिलोके तथाहि।
उपवनसहकारोद्गासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम्॥

अस्य छलशब्देन सभृङ्गसहकारप्रतिषेधेन सकालकूटाः शराः स्थापिताः। एवं,

विराजति व्योमवपुः पयोधि-
स्तारामयास्तत्र च फेनभङ्गाः।

इत्यादि रूपेणाप्युपमेयप्रतिषेधो बोद्धव्यः। केचित्तु अपह्नुतेः सादृश्यमूलकत्वमनङ्गीकुर्व्वन्तः किञ्चिदपह्नुत्य कस्यचित् स्थापनमपह्नुतिमाहुः। तत्रोदाहरणम्।

चन्दनं चन्द्रिका गन्धो गन्धवाहश्च दक्षिणः।
इयमग्निमयी सृष्टिः शीता किल परान् प्रति॥

यथा वा,—

अमृतस्यन्दिकिरणश्चन्द्रमा मम नो मतः।
अन्य एवायमर्कात्मा विषनिष्यन्दिदीधितिः॥

इदं मम। इयमेवान्यस्य भ्रान्तिवारणे सति भ्रान्तापह्नुतिरुच्यते। यथा,

नागरिक, समधिकोन्नतिरिह
महिषः कोऽयमुभयतः पुच्छः।

नहि नहि करिकलभोऽयं
शुण्डादण्डोऽयमस्य न तु पुच्छम् ।

कल्पितभ्रान्तिपूर्व्वामपीच्छन्ति । यथा,

जटा नेयं वेणीकृतकचकलापो न गरलं
गले कस्तुरीयं शिरसि शशिलेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिभ्रान्त्या कुसुमशर, किं मां प्रहरसि ॥

वस्तुतस्तु वक्ष्यमाणभ्रमालङ्कारे निश्चयालङ्कारे वाऽनयोरन्तर्भावः । ये तु तदलङ्कारद्वयं नेच्छन्ति तेषामत्रैवान्तर्भावः ।

भिन्नाधिकरणयोः प्रतिषेधस्थापनाभ्यामपह्नवमुपनिबध्यते । तत्रोदाहरणम् ।

हलाहलो नैव विषं विषं रमा
जनाः परं व्यत्ययमत्र मन्वते ।
निपीय जागर्त्ति सुखेन तं शिवः
स्पृशन्निमां मुह्यति निद्रया हरिः ॥

## तद्विपरीतो निश्चयः ॥ ४४

तस्या अपह्नुतेर्व्विपरीतो निश्चयोनामालंकारः । यत्र किलोपमाननिषेधेनोपमेयमेव स्थाप्यते, तत्र भवेन्निश्चयो नाम । उदाहरणम् ।

वदनमिदं न सरोजं नयने नेन्दीवरे एते ।
इह सविधे मुग्धदृशो मधुकर, न मुधा परिभ्राम्य ॥

यथावा,

किं तावत् सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते तरुण्याः।
संशय्य क्षणमिति निश्चिकाय कश्चि-
द्विब्बोकैर्वकसहवासिनां परोक्षैः॥

अयं निश्चयान्तः सन्देह इति केचित्। तत्र वक्ष्यामः। यथावा,

नेन्दुरंकविनिर्मुक्तः न पद्मं केसरोज्झितम्।
मुखं हरिणशावाक्ष्याश्चारुचञ्चललोचनम्॥

इदं मम। सोऽयमलंकारोऽपह्नुतिवत् सन्देहस्यापि प्रतिद्वन्द्वितामवगाहते।

## उपमानस्योपमेये संशयः सन्देहः॥ ४५

उपमेयमुपमानतया यत् सन्दिह्यते, स भवेत् सन्दोहोनाम। स चायं शुद्धो निश्चयमध्यश्च। क्रमेणोदाहरणम्।

किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं
किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ।
खगौ वा गुच्छौ वा कनककलसौ वा किमु कुचौ
तड़िद्वा तारा वा कनकलतिका वा किमबला॥

यथावा मम सतीपरिणये

वल्ली नु कल्पद्रुममञ्जरी नु कान्ता नु पद्मत्रयपद्मिनी नु।
इतीव लोला युगपत् द्विरेफा योषित्सु पेतुर्धृतपुष्पिकासु॥

अनयोः कस्याञ्चित् कोटौ वस्तुगत्योपमेयानुप्रवेशेऽपि कोटा-

न्तराणामतथाभूतत्वादुदाहरणतयोपन्यासो न विरुध्यते ।
यथा वा,

इयं सौदामनी वा स्यादुताष्टापदवल्लरी ।
तन्वङ्गि, त्वयि दृष्टायामेवं संशेरते जनाः ॥

द्वितीयः खल्वपि,

सायं नायमुदेति वासरमणिश्चन्द्रो न चण्डद्युति-
र्दावाग्निः कथमम्बरे किमशनिः स्वच्छान्तरीक्षे कथम् ।
हन्तेदं निरणायि पान्थरमणीप्राणानिलाशाशया
धावद्घोरविभावरीविषधरीभोगस्य भीमोमणिः ॥

अत्र मध्ये सूर्य्याद्यभावनिश्चयान्निश्चयमध्यत्वं सन्देहस्य । मधेत्र यथावद्वस्तुनिर्णये द्वितीयसंशयानुत्थानेन निश्चयमध्यत्वानुपपत्तेः । केचिन्निश्चयान्तमपि सन्देहमिच्छन्ति । तत्रोदाहरणम् ।

इन्दुः किं क्व कलंकः सरसिजमेतत् किमम्बु कुत्र गतम् ।
ललितविलासवचनैर्मुखमिति हरिणाक्षि, निश्चितं परतः ॥

सोऽयमुपेक्षितोऽन्यैरिति नात्र तद्व्युत्पादनम् । निश्चयाख्यस्त्वयमलंकारः पृथगेवेति युक्तमुत्पश्यामः । ये तु उपमेये धर्म्मिण्युपमानसंशयं सन्देहालंकारं वदन्तः,

किं तावत् सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते तरुण्याः ।
संशय्य क्षणमिति निश्चिकाय कश्चि-
द्बिब्बोकैर्बकसहवासिनां परोक्षैः ॥

इति निश्चयान्तसन्देहस्योदाहरणमाहुः । तेषां कथं न पूर्व्वापरविरोध इति तएव प्रष्टव्याः । अत्र खल्वेकस्मिन्

धर्म्मिण्युपमानमुपमेयं चालम्ब्य संशयो वर्णितः। न त्वयमुपमेये धर्म्मिण्युपमानसंशयः। न ह्येकमात्रकोटिकः संशयो भवति।

स खल्वयं भूयोऽपि त्रिधा भिद्यते उपमेयान्यकोटिमात्रघटितः उपमेयकोटिमध्यस्तदवसानश्च। सर्व्वत्रैव संशयएव पर्य्यवसानं न खल्वपि निश्चयोऽस्ति। तत्राद्यस्य भेदस्योदाहरणम्।

आनीय द्विषतां धनानि विपिने राजन्यचूडामणे,
तेष्वालोक्य विनिर्म्मलं हिमशिलाखण्डं करण्डं पुनः।
किं वाद्यं किमु पेषणं किमु धनं किं क्षेपणीयायुधं
किं वा दैवतमित्यनिश्चितधियो मन्दाः पुलिन्दा जनाः॥

अत्र कस्यामपि कोटावुपमेयं न प्रविष्टम्। द्वितीयो यथा लक्ष्मी नु कल्पद्रुममञ्जरी नु इत्यादिः, सायं नायमुदेति वासरमणिरित्यादिश्च। तृतीयः खल्वपि। किमिन्दुः किं पद्ममित्यादि। अत्रोपमेयकोटिमध्यत्वं तदवसानत्वञ्च वस्तुतस्तेन। न खल्वपि सन्देग्धुस्तदवगतिरस्ति।

ये तु वस्तुसादृश्यमात्रादेकस्मिन्ननवधारणात्मकमवबोधं सन्देहालंकारमाहुः, तेषां मते इमान्यपि सन्देहोदाहरणानि प्रथन्ते। यथा,

आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं तदेतदपरं यच्चैकतानं मनः।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते
तद्ब्रूयाः सखि, योगिनी किमसि भोः किं वा वियोगिन्यसि॥

सरोजपत्रे नु विलीनषट्पदे
विशालदृष्टेः स्विदमू विलोचने।
शिरोरुहाः स्विन्नतपक्ष्मसन्तते-
र्द्विरेफवृन्दं नु निःशब्दनिश्चलम्॥
अगूढ़हासस्फुटदन्तकेसरं
मुखं स्विदेतद्विकचं नु पङ्कजम्।
इति प्रलीनां नलिनीवने सखीं
विदाम्बभूवुः सुचिरेण योषितः॥ युग्मकम्।

द्वावप्येतावभिनवजबापुष्पभासौ निवासौ
तिष्ठत्यन्ते द्वयमपि वियन्मण्डलस्योपसन्ध्यम्।
अस्तं कोयात्युदयति च कः को रविः कः शशांकः
का च प्राची तदिह न वयं का प्रतीचीति विद्मः॥

पूर्व्वमते तु वितर्कमात्रमेतत्। वैचित्र्यविशेषस्त्वत्रापि सहृ-दयसंवेद्यो विद्यते। तदेतन्मतं समीचीनमिति प्रतिपद्यामहे। प्राचामनुमतन्तु लक्षणं प्रागुपदर्शितमित्यवधेयम्। एवमन्य-त्राप्यनुसन्धेयम्। अयमेव संशयालंकारः ससन्देहश्च भण्यते।

## अन्यस्यान्यथोत्प्रेक्षणमुत्प्रेक्षा॥ २६

उपमेयमुपमानरूपेण यदुत्प्रेक्ष्यते, सेयमुत्प्रेक्षा। उत्प्रेक्षणं पुनरुत्कटकोटिका सम्भावना। सा खल्वत्राहार्य्या प्रत्येतव्या। उपमेयमभिधायैव तस्योपमानरूपेण सम्भावनायाः करणात्। उदाहरणम्।

उच्चर्ष यो मम न सहते जातिवैरी निशायां
इन्दोरिन्दीवरदलदृशा तस्य सौन्दर्य्यदर्पः।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षात्
लग्नां मन्ये ललिततनु, ते पादयोः पद्मलक्ष्मीम्॥

जातिगुणक्रियाद्रव्यैर्हेतुफलादिभिरन्यथा चास्यालङ्कारस्य प्रभूततमो भेदः कैश्चिदुपदर्शितः। उपमादिष्विव सादृश्यमूलकेष्वलंकारान्तरेषु तथाविधवैचित्र्यविशेषाभावात् पुनरपेक्षितोऽस्माभिः। उत्प्रेक्षाव्यञ्जकाश्च शब्दादण्डिना प्रदर्शिताः।

मन्ये शंके ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥

आदिपदात् अवैमि ऊहे तर्कयामि जानामीत्यादयः। एषामुदाहरणान्याकरेषु द्रष्टव्यानि।

यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा।
अहन्त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलंकांकिततनुम्॥

इत्यत्र मन्ये शब्दप्रयोगेऽपि यथोक्तसम्भावनाया अनवगतेर्नायमलंकारः। किन्तु वितर्कमात्रमित्यर्व्वाचीनाः। प्राचीनास्तु भोजराजादयोऽत्राप्युत्प्रेक्षामेवाचक्षते। लाञ्छनं खल्वत्र व्रणकिणात्मना सम्भावितम्। परमियमपह्नुत्या संकीर्य्यते।

प्राञ्चस्तु अन्यथाऽवस्थितस्यान्यथोत्प्रेक्षणमुत्प्रेक्षेत्याहुः। तेषां नास्यालंकारस्य सादृश्यमूलकत्वनियमः। तन्मतेन,—

गङ्गाम्भसि सुरत्राण, तव निस्त्राननिस्वनः।
स्नातीवारिवधूवर्गगर्भपातनपातकी॥
लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां मता॥
पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम्।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः॥
मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः।
मन्ये मार्त्तण्डगृह्याणि पद्मान्युद्धर्त्तुमुद्यतः॥

अङ्गुलीभिरिव केशसञ्चयं
संनिगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं
चुम्बतीव रजनीमुखं शशी॥

इत्यादीन्याञ्जसान्युत्प्रेक्षोदाहरणानि सङ्गच्छन्ते। न खल्वत्र कयोश्चित् क्रिययोरुपमानोपमेयभाव उपादीयते।

तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्।
हाराय गुणिने स्थानं न दत्तमिति लज्जया॥

इत्यत्र स्तनयोर्लज्जाया असम्भवात् लज्जयेवेत्युत्प्रेक्षायां पर्य्यवसानम्। न त्वियं कस्यचिदुपमानं भवति। एवञ्च,

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौतानना:।
भीता भर्त्तृकरावलम्बितकरास्त्वच्छत्रुनार्य्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव॥

इत्यत्र पुनरश्रुहेर्त्विवाहत्वमुत्प्रेक्षणीयम्, नत्वियमुपमा । एवमन्यत्रापानुसन्धेयम् ।

सैषा स्थली यत्र विचिन्वता त्वां
भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्द-
विश्लेषदुःखादिव बद्धमौनम् ॥

इति हेतूत्प्रेक्षायां,

रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः ।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ॥

इति फलोत्प्रेक्षायाञ्चोक्तैव रीतिरनुसरणीया । केचित्तु उपमेयस्योपमानस्वरूपेण सम्भावनामुत्प्रेक्षामाचक्षाणास्तद्विरुद्धमेव, हेतुफलादिभिस्तां विभजते। तदत्र तएव प्रष्टव्याः । अनर्थशब्दोपादानाच्च,—

विरक्तसन्ध्याकपिशं पुरस्ताद्-
यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः
प्रत्युद्गतो मां भरतः ससैन्यः ॥

इत्यत्र शङ्के शब्दोपादानेऽपि प्रत्युद्गतस्य भरतस्य वस्तुसद्रूपेणैव तर्कितत्वान्नायमलंकारः ।

## उपमेयस्योपमानभ्रमो भ्रान्तिमान् ॥ २७

उपमेये धर्मिणि यदुपमानस्य भ्रमो भवति, उपमेयमुपमानरूपेण यदन्यथा निश्चीयते, सोयं भ्रान्तिमान् नाम। उदाहरणम् ।

पालयति त्वयि वसुधां विविधाध्वरधूममालिनीः ककुभः।
पश्यन्तो दूयन्ते घनसमयाशंकया हंसाः॥

यथावा,

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्त्तिं विबुधरमणीगीयमानां यदीयाम्।
स्रस्तापाङ्गाः सरसविसिनीकाण्डसंजातशंका-
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति॥

अत्र क्वचिद्भ्रान्तेरुत्तरोत्तरपल्लवनेन क्वचिद्भिन्नकर्त्तृकोत्तरोत्तरभ्रान्तिनिबन्धनेन क्वचिदन्योन्यभ्रान्तिनिबन्धनेन च चमत्कारातिशयमाहुः। उदाहरन्ति च,

वल्लालक्षौणिपाल, त्वदहितनगरे सञ्चरन्ती किराती
कीर्णान्यादाय रत्नान्युरुतरखदिराङ्गारशंकाकुलाङ्गी।
क्षिप्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती
श्वासामोदानुधावन्मधुकरनिकरैर्धूमशंकां करोति॥
शिञ्जानैर्मञ्जरीति स्तनकलसयुगं चुम्बितं चञ्चरीकै-
स्तत्त्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः।
तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकै-
रित्थं चोलेन्द्रसिंह, त्वदरिमृगदृशां नाप्यरण्यं शरण्यम्॥
पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः।
सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्त्तुमिच्छति॥

## तदपगमः प्रमा॥ २८

तस्य भ्रमस्य यदपगमनं भ्रमनिवृत्तिरिति यावत्। सोऽयं प्रमा नामालंकारः। उदाहरणम्।

नानारत्नज्योतिषां सन्निपातै-
श्छन्नेष्वन्तःसानुवप्रान्तरेषु।
बद्धां बद्धां भित्तिशंकाममुष्मि-
न्नावानावान्मातरिश्वा निहन्ति॥

अत्र रत्नज्योतिःसन्निपातेनोद्भवन्ती भित्तिभ्रान्तिरागच्छता मातरिश्वनाऽपनीयते। यथा वा,

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम्।
अयमपि पटुर्धारासारो न वाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्व्वशी॥

यथा खलु तद्गुणस्य प्रतिद्वन्द्वि अतद्गुणोनामालंकारान्तरं, यथावा सन्देहस्य निश्चयः, तथा भ्रान्तिमतः प्रतिद्वन्द्वीदमपि भवितुमर्हति। निश्चयस्य सन्देहप्रतिद्वन्द्विताऽस्य पुनर्भ्रान्तिमत-इत्यतो भेदेनानयोरुपादानम्। एकएव त्वलंकारो द्वाविमौ भेदावभिप्लवते। निश्चयालंकारभूमिरपि यथावद्वस्तुनिश्चय इत्येकस्यैवायं पृथगुपदेशः प्रकारभेदप्रदर्शनार्थं इत्यास्थेयम्। यदि तु,

सायं नायमुदेति वासरमणिश्चन्द्रो न चण्डद्युति-
र्दावाग्निः कथमम्बरे किमशनिः स्वच्छान्तरिक्षे कथम्।

हन्तेदं निरणायि पान्थरमणीप्राणानिलाशाशया
धावद्घोरविभावरीविषधरीभोगस्य भीमो मणिः ॥

इत्यादौ विपर्य्ययस्यापि सन्देहप्रतिद्वन्द्वितया निश्चयालंकारत्वमिष्यते, तदा पृथगेवायमलङ्कारोऽभ्युपगन्तव्यः इति सर्व्वमवदातम्।

## साधर्म्यवैधर्म्याभ्यां स्मृतिः स्मरणम् ॥ २९

साधर्म्येण वैधर्म्येण वा यत् किञ्चित् स्मर्य्यते, तत् स्मरणं नामालङ्कारः। क्रमेणोदाहरणम्।

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं वाणलक्षीचकार।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥

शिरीषमृद्वी गिरिषु प्रपेदे
यदा यदा दुःखशतानि सीता।
तदा तदाऽस्याः सदनेषु सौख्य-
लक्षाणि दध्यौ गलदश्रु रामः ॥

परम्परासादृश्यमूलाऽपि स्मृतिरयमलंकार इति मन्यन्ते। यथा,—

दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम्।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥

अत्र पुत्तलिकायाः स्त्रियाः साधर्म्यात्तथाभूतायाः श्रियः स्मरणेन तत्सम्बन्धिनो जलनिधिमन्थनस्य स्मरणम्।

सौमित्रे, ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते, चन्द्रोऽयमुन्मीलति।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि, हा कुरङ्गनयने, चन्द्रानने, जानकि॥

अत्र कुरङ्गेण तन्नयनस्य ततस्तत्सदृशस्य सीतानयनस्य तत्सम्बन्धात् सीतायाश्च स्मरणम्।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः॥

अत्र नरपतिभुजस्मरणं न सादृश्यमूलमिति नायमलंकार इत्येके। भुवो दुर्भरवस्तुधारणमक्लान्तिश्चेत्यनेन सामान्येन प्रस्तुत भुवोऽप्यभ्यर्हितस्य नरपतिभुजस्य स्मरणमित्येतदपि सादृश्यमूलमेवेत्यपरे।

## एकस्यानेकधोल्लेखनमुल्लेखः॥ ३०

एकमेव वस्तु यदनेकधोल्लिख्यते, सोऽयमुल्लेखो नामालङ्कारः। एकस्यानेकधोल्लेखश्च ग्रहीतृभेदाद्विषयभेदाद्वा भवति। उभयथापि निमित्तभेदं विना तदनुपपत्तेरनुपात्तोऽपि निमित्तभेदोऽभ्युपगत एव। अस्योदाहरणम्।

प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति गोपैः।
नारायण इति भक्तैर्ब्रह्मेत्यग्राहि योगिभिर्देवः॥

अत्रैकस्य भगवतोऽनेकेनानेकधोल्लेखे तेषां रुचिभेदादयो-यथायोगं निमित्तभावं प्रतिपद्यन्ते। यथा वा,

गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः।
यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम्॥

एवं,

परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ।
कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पनाः॥

इत्यादावप्युल्लेख एव प्रवर्त्तते। विषयभेदात् खल्वपि।

गाम्भीर्य्येण समुद्रोऽसि गौरवेणासि पर्व्वतः।
कामदत्वाच्च लोकानामसि त्वं कल्पपादपः॥

अधिकरणभेदेनानेकधोल्लेखेऽप्युल्लेखमिच्छन्ति। तत्रोदा-हरणम्।

अलसं कुचयोः क्षमं विलग्ने
विपुलं चक्षुषि विस्तृतं नितम्बे।
अधरेऽरुणमाविरस्तु चित्ते
करुणाशालि कपालिभागधेयम्॥

अत्रैकस्य कपालिभागधेयस्य तत्तदधिकरणभेदेनानेकधो-ल्लेखः। यथा वा,

वह्निर्श्चोरुपरि क्षणं रविरभूच्छत्रं बलिध्वंसिनो-
रत्नं मूर्द्धि ललाटसीम्नि तिलकं कर्णान्तिके कुण्डलम्।

अंसे चक्रमुरःस्थले मणिवरो नाभौ सरोजासनो-
यस्याङ्गे कटकस्त्रिविक्रमगतेः पायादपायात् स वः ॥

अयं रूपकेण सङ्कीर्य्यते।

कस्तूरीतिलकन्ति भालफलके देव्यामुखाम्भोरुहे
रोलम्बन्ति तमाललोलमुकुलोत्तंसन्ति मौलिं प्रति।
याः कर्णे विकचोत्पलन्ति कुचयोरंसे च कालागुरु-
स्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥

सोऽयमुपमासङ्कीर्णः। एवमन्यसङ्करोऽप्यूहनीयः। माला-रूपके ग्रहीत्रादिभेदो नास्ति प्रस्तुते तु तदस्तीत्यनयोर्भेदः। वस्तुतस्त्वेक-एवालङ्कारो-वैचित्र्य-विशेषापेक्षयाऽनेकधोपदिश्यते। तत्र च क्वचित् किञ्चिद्वैचित्र्यमाविर्भवत् किञ्चिदभिभवति। क्वचिच्चानेकमपि समुद्भूतस्वरूपं चमत्कारमादधातीत्यनुचिन्त-नीयम्।

यमः खलु महीभृतां हुतवहोऽसि तन्मीहतां
सतां प्रति युधिष्ठिरोधनपतिर्धनाकाङ्क्षिणाम्।
गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्मितं
त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥

इत्यादौ सम्बन्धिभेदप्रयुक्तमुल्लेखमाचक्षते।

लोकसीमातिवर्त्तिन्युक्तिरतिशयोक्तिः
पञ्चविधा ॥ २१

या किलोक्तिर्लोकसीमानमतीत्य वर्त्तते, सेयमतिशयोक्तिः। सा च पञ्चधा भिद्यते। तद्भेदानाह,

भेदेऽभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ हेतुफल-पौर्व्वापर्य्यविपर्य्ययश्चेति ॥ ३२

वस्तुतो भिन्नयोरेवापह्नुतभेदयोर्यो योऽभेदः, सा प्रथमा। रूपके ह्यनपह्नुतभेदयोरभेदः, प्रकृते त्वपह्नुतभेदयोरित्यनयोर्भेदः। उदाहरणम्।

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥

अत्र मुखादि कमलाद्यभेदेनाध्यवसितम्। यथावा—

वापी काऽपि स्फुरति गगने तत्परं सूक्ष्मपद्या
सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली।
अग्रे शैलौ सुकृतिसुभगौ चन्दनच्छन्नदेशौ
तत्रत्यानां सुलभममृतं सन्निधानात् सुधांशोः॥

अत्र नाभिरोमावलित्रिवलीस्तनमुखमित्येतानि वापीसूक्ष्म-पद्यासोपानालीशैलसुधांश्वभेदेनाध्यवसितानि। केचित् पुनरुपमेय निगरणेन तस्योपमानतयाऽध्यवसानं प्रथमामतिशयोक्तिमाहुः। निगरणञ्च तस्यानुपादाने उपादानेऽप्यधःकारमात्रेण निष्पद्यते। यदाहुः,

विषयस्यानुपादानेऽप्युपादानेऽपि सूरिभिः।
अधःकरणमात्रेण निगीर्णत्वं प्रचक्ष्यते॥ इति

तेषां मते मुखं द्वितीयश्चन्द्र इत्यादावपि प्रथमाऽतिशयोक्ति-रेव प्रवर्त्तते। इयञ्च बहुभिर्भङ्गीभिरुपनिबध्यते। दिङ्मात्र-मुदाह्रियते।

अनुच्छिष्टोदेवैरपरिदलितो राहुदशनै:
कलङ्कानाश्लिष्टो न खलु परिभूतो दिनकृता।
कुहूभिर्नो लुप्तो न च युवतिवक्त्रेण विजित:
कलानाथ: कोऽयं कनकलतिकायां विजयते॥

इयं व्यतिरेकगर्भा।

मुक्ताविद्रुममन्तरा मधुरस: पुष्पं परं भूरुहं
प्रालेयद्युतिमण्डले खलु तयोरेकासिका नार्णवे।
तत्रोदश्वति अङ्कमूर्द्धि न पुन: पूर्व्वाचलाभ्यन्तरे
तानीमानि विकल्पयन्ति तरुमे येषां न सा दृक्पथे॥

अपह्नुतिगर्भेयम्। यत्र च सत्यपि सम्बन्धे असम्बन्धो-वर्ण्यते, सेयं द्वितीया। उदाहरणम्।

अस्या: सर्गविधौ प्रजापतिरभूच्चन्द्रोनु कान्तिप्रद:
शृङ्गारैकरस: स्वयं नु मदनो मासोनु पुष्पाकर:।
वेदाभ्यासजड़: कथं नु विषयव्यावृत्तकौतूहलो-
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनि:॥

अत्र सत्यपि पुराणप्रजापतिनिर्म्माणसम्बन्धेऽसम्बन्धो वर्णित:। तद्विपर्य्ययौ अभेदे भेद: असम्बन्धे सम्बन्धश्च। यत्राभेदेऽपि भेदो वर्ण्यते, सेयं तृतीया। यथा—

अन्यत् सौकुमार्य्यं अन्यैव च काऽपि वर्त्तनच्छाया।
श्यामा सामान्यप्रजापते रेखाऽपि च न भवति॥

यथा वा—

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भारा: खलु तेऽन्यएव विधिना यैरेष सृष्टो युवा।

श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढ़मनामस्त्राणि वस्त्राणि च ॥

असत्यपि सम्बन्धे सम्बन्धो यदुपनिबध्यते, सैषा चतुर्थी। इयञ्च यद्यर्थशब्देनोच्यते। उदाहरणम्।

उभौ यदि व्योम्नि पृथक् प्रवाहा-
वाकाशगङ्गापयसः पतेताम्।
तदोपमीयेत तमालनील-
मामुक्तमुक्तालतमस्य वक्षः ॥

इह खलु पूर्व्वं कारणं परतः कार्य्यमिति कार्य्यकारणयोः पौर्व्वापर्य्यं प्रसिद्धम्। तस्य योऽयं विपर्य्ययः, सा भवेत् पञ्चमी। इयञ्च द्विधा भिद्यते कार्य्यस्य कारणात् पूर्व्वमुक्तौ कार्य्यकारणयोर्युगपदुक्तौ च। उभयमपि कारणस्य शीघ्रकारितां वक्तुमुपनिबध्यते। क्रमेणोदाहरणम्।

उदेति पूर्व्वं कुसुमं ततः फलं
घनागमः प्राक् तदनन्तरं पयः।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु सम्पदः ॥

सममेव समाक्रान्तं द्वयं द्विरदगामिना।
तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षिताम् ॥

सेयमतिशयोक्तिः प्रायः सर्व्वेष्वलङ्कारेषु मूलतयोपतिष्ठते। यदाहुः।

सैषा सर्व्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्य्यः कोऽलङ्कारोऽनया विना ॥

वक्रा वैचित्र्यवती उक्तिरतिशयोक्तिरित्यर्थः । किं बहुना । कमलमिव मुखं मनोज्ञमेतदित्याद्युपमाऽपि न खल्वतिशयोक्ति-मन्तरेण निर्व्वहति । न हि यदेव मनोज्ञत्वं कमले तदेव मुखे वर्त्तते, अन्यद्धि मनोज्ञत्वं कमलेऽन्यच्च मुखे । द्वयोश्चाभेदाध्यव-सायमुपजीव्योपमा प्रवर्त्तते । एतमन्यत्राप्यनुसन्धेयम् । दण्डि-नाऽप्युक्तम् ।

अलङ्कारान्तराणामप्येकमाहुः परायणम् ।
वागीशमहितामुक्तिमिमामतिशयाभिधाम् ॥

रुद्रटस्तु स्वोक्तान् कतिचिदलङ्कारान् साक्षादेवातिशयोक्ते-र्भेदानङ्गीचकार । यदाह—

पूर्व्वविशेषोत्प्रेक्षाविभावनातद्गुणाधिकविरोधाः ।
विषमासङ्गतिपिहितव्याघातहेतवो भेदाः ॥ इति ।

## प्रस्तुतादप्रस्तुतस्य गम्यत्वं समासोक्तिः ॥ ३२

कस्माच्चित् प्रस्तुतादप्रस्तुतमवगम्यते यत्, सा भवेत् समा-सोक्तिर्नाम । अप्रस्तुतावगतिश्च श्लिष्टविशेषणमहिम्नेति वदन्ति । उदाहरणम् ।

लब्धा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।
जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बलानां सा ॥

अत्र प्रस्तुतजयलक्ष्मीवृत्तान्तेनाप्रस्तुता काचित् कामिनी प्रतीयते । अन्येत्वाहुः । प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः समा-सोक्तिः । व्यवहारसमारोपश्च कार्य्यलिङ्गविशेषणैर्भवतीति ।

उक्तोदाहरणे च जयलक्ष्मयां कामिनीव्यवहारः समारोप्यते।
यथा वा,

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करं व्याधुन्वत्याः पिबसि रतिसर्व्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर, हतास्त्वं खलु कृती॥

अत्र मधुकरे कामुकव्यावहारसमारोपः। समानकार्य्यं तत्र निमित्तम्।

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो दैवगतिश्चित्रा न तथापि समागमः॥

अत्र सन्ध्यादिवसयोः स्त्रीपुंलिङ्गमात्रेण नायकनायिकाव्यवहारसमारोपः। विशेषणेन तूदाहृतम्।

## तद्विपरीता त्वप्रस्तुतप्रशंसा॥ ३४

तस्याः समासोक्तेर्व्विपरीता भवत्यप्रस्तुतप्रशंसा नामालङ्कारः। तद्भेदेनाह—

## निमित्तकार्य्यसामान्यविशेषतुल्योक्तेः पञ्चविधा॥ ३५

कस्यचित् प्रस्तावे निमित्तकार्य्यसामान्यविशेषतुल्यान्यप्रस्तुतान्युच्यन्ते तेभ्यश्च प्रस्तुतमवगम्यते, सेयमप्रस्तुतप्रशंसा निमित्ताद्यभिधानभेदात् पञ्चधा भिद्यते। तत्र कार्य्ये प्रस्तुते तन्निमित्तस्योक्तौ प्रथमा। उदाहरणम्।

यांताः किं न मिलन्ति सुन्दरि, पुनश्चिन्ता त्वया मत्कृते
मो कार्य्या नितरां कृशाऽसि कथयत्येवं सबाष्पे मयि।
लज्जामन्थरकातरेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः॥

अत्र प्रस्थानान्निवृत्तोऽसि किमिति कार्य्ये पृष्टे तत्कारण-मभिहितम्। यथावा—

कालिन्दि, ब्रूहि कुम्भोद्भव, जलधिरहं नाम गृह्णासि कस्मा-
च्छत्रोर्मे, नर्म्मदाऽहं त्वमपि वदसि मे नाम कस्मात् सपत्न्याः।
मालिन्यं तर्हि कस्मादनुभवसि, मिलत्कज्जलैर्मालवीनां
नेत्राम्भोभिः, किमासां समजनि, कुपितः कुन्तलक्षोणिपालः॥

अत्र किमासां समजनि इति कार्य्ये प्रस्तुते तत्कारणं कुपितः कुन्तलक्षोणिपाल इत्येतदभिहितम्। तेनैतासां पति-वियोगरूपं कार्य्यमवगमते। कारणे प्रस्तुते कार्य्यस्योक्तौ द्वितीया। यथा,

राजन्, राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे, भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते।
इत्थं नाथ, शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थामवलोक्य शून्यवलभावेकैकमाभाषते॥

अत्रारयः पलायिता इति कारणे प्रस्तुते तत्कार्य्यं पथिक-मुक्तशुकभाषणमुक्तम्। विशेषे प्रस्तुते सामान्याभिधाने तृतीया। उदाहरणम्।

परोऽवजानाति यदज्ञताजड़-
स्तदुन्नतानां न निहन्ति धीरताम्।

समानवीर्य्यान्वयपौरुषेषु यः
करोत्यतिक्रान्तिमसौ तिरस्क्रिया ॥

अत्र त्वदवज्ञयाऽस्मद्वैर्य्यं न हृतमिति विशेषे प्रस्तुते सामान्यमभिहितम् । यथावा,

विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्च्चिषं कक्षे शेरते तेऽभिमारुतम् ॥

अत्र प्रागेव सामर्षे शिशुपाले रुक्मिणीहरणाद्वैरं विधायौदासीन्यं कृष्णस्य न युक्तमिति विशेषे प्रस्तुते सामान्यमुक्तम् । सामान्ये प्रस्तुते विशेषस्योक्तौ चतुर्थी । यथा,

एतत्तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो-
यन्मुक्तामणिरित्यमंस्त स जड़ः शृखन्यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीयगतो ममेत्यनुदिनं निद्राति नान्तः शुचा ॥

अत्रास्थाने जड़ानां ममत्वं भवतीति जड़सामान्ये प्रस्तुते जड़विशेषवृत्तान्तोऽभिहितः । तुल्ये प्रस्तुते तुल्यस्योक्तौ पञ्चमी । यथा,

आदाय वारि परितः सरितां मुखेभ्यः
किन्तावदर्ज्जितमनेन दुरर्णवेन ।
क्षारीकृतञ्च वड़वादहने हुतञ्च
पातालकुक्षिकुहरे विनिवेशितञ्च ॥

अत्र कस्मिंश्चिद्दुराचारे धनिनि प्रस्तुते अप्रस्तुतस्यार्णवस्योक्तिः । यथावा,

आवद्धकृत्त्रिमसटाजटिलांसभित्ति-
रारोपितो मृगपतेः पदवीं यदि श्वा ।
मत्तेभकुम्भतटपाटनलम्पटस्य
नादं करिष्यति कथं हरिणाधिपस्य ॥

अत्र विद्वद्वेशादिमात्रेण विद्वत्तामभिनयति वैधेये प्रस्तुते सिंहवेशधारिणः शुनोऽभिधानम् । यथावा,

अब्धेरम्भःस्थगितभुवनाभोगपातालकुक्षेः
पोतोपाया इह हि बहवो लङ्घनेऽपि क्षमन्ते ।
अक्षीरिक्तः कथमपि भवेदेष दैवात्तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥

अत्र दुष्प्रभोः पूर्णतैव वरं न रिक्ततेति प्रस्तुते एवमभिहितम् । श्लेषेणापि तुल्यात्तुल्यस्यावगतिर्दृश्यते । उदाहरणम् ।

येनास्यभ्युदितेन चन्द्र, गमितः क्लान्तिं रवौ तत्र ते
युज्येत प्रतिकर्त्तुमेव न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मनाक्
अस्त्वेवं जड़धामता तु भवतो यद्व्योम्नि विस्फुर्ज्जसे ॥

यथा वा,

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयने न महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन ॥

सेयमप्रस्तुतप्रशंसा काचिदप्रस्तुते प्रस्तुतस्याध्यारोपणमन्तरेणैव प्रवर्त्तते। यथोदाहृते। काचिदध्यारोपणेन, काचित्त्वंशतोऽध्यारोपणेन। क्रमेणोदाहरणम्।

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाकोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजनः सर्व्वात्मना सेवते
न च्छायाऽपि परोपकारकरणी मार्गस्थितस्यापि मे॥

अत्र दित्सुरधमजातिः प्रस्तुतः। न खलु शाकोटकेन सह वाकोवाक्यं सम्भवतीति प्रस्तुताध्यारोपेणैवेयं प्रवर्त्तते। अन्यथा प्रमत्तगीतता वाक्यस्यापद्येत।

सोऽपूर्व्वो रसनाविपर्य्ययविधिस्तत् कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा।
सर्व्वं विस्मृतवानसि भ्रमर हे, यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः, क एष ग्रहः॥

अत्र दुष्प्रभोः सेवकः प्रस्तुतः प्रतीयते। वारणस्य रसनाविपर्य्ययः कर्णचापलं मदः शून्यकरत्वञ्चेत्येतान्यत्र भ्रमरस्यासेवननिमित्तत्वेनोपात्तानि। तत्र कर्णचापलं तावद्भवत्यसेवननिमित्तमिति न तदंशे प्रस्तुताध्यारोपणापेक्षा। रसनाविपर्य्ययः शून्यकरत्वं च न खल्वप्यसेववनहेतुभावमुपगच्छति, मदः प्रत्युत सेवनएव हेतुर्भवतीत्येतेष्वंशेषु प्रस्तुतस्याध्यारोपणमपेक्षते। न हि तदन्तरेण वाक्यं समञ्जसं भवति। वैधर्म्येणापीयमुपनिबध्यते। यथा।

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटुं मृषा
नैषां गर्व्वगिरः शृणोषि न पुरः प्रत्याशया धावसि।
काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग, कुत्र भवता किं नाम तप्तं तपः॥

अत्र राजसेवानिर्व्विण्णो वक्ता वैधर्म्येणावगम्यते। यथा वा,

धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः॥

अत्र वाताधन्या अहन्त्वधन्य इति प्रतीयते।

आहूतेषु विहङ्गमेषु मशको नायान् पुरोवार्य्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम्।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम्॥

अत्राचेताः प्रभुरेव प्रस्तुतः स तु सामान्यवृत्तान्तेनैवावगम्यमानो न पुनरुपमानतयोपादानमर्हति। एवं,

अनुरागवन्तमपि लोचनयो-
र्दधतं वपुः सुखमतापकरम्।
निरकासयद्रविमपेतवसुं
वियदालयादपरदिग्गणिका॥

इति समासोक्तावप्यपरदिशो गणिकात्वमन्यथैव प्रतीयमानं न पुनर्व्वचनेन कदर्थनीयम्। अपरदिगित्येतावतैव खल्वस्य वाक्यं समापयितुमुचितम्।

प्रस्तुतात् प्रस्तुतावगतिः प्रस्तुतांकुरः ॥ ३५

प्रस्तुतादेव कस्माच्चिदुपवर्णितात् प्रस्तुतमेव किञ्चिदवगम्यते यत्, सोऽयं प्रस्तुतांकुरः। उदाहरणम्।

कोशद्वन्द्वमिमं दधाति नलिनी कादम्बचञ्चूक्षतं
धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम्।
इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे
चेलान्तेन तिरोदधे स्तनतटं विम्बाधरं पाणिना ॥

अत्र दीर्घिकाया वृत्तान्तस्तत्तटविहारवत्याश्चोभयमपि प्रस्तुतं तत्रैकेन प्रस्तुतेन प्रस्तुतस्यैवान्यस्यावगतिः। यथावा,

अङ्गासङ्गि मृणालकाण्डमयते भृङ्गावलीनां रुचं
नासामौक्तिकमिन्द्रनीलसरणिं श्वासानिलादृगाहते।
दन्तेयं हिमवालुकाऽपि कुचयोर्धत्ते क्षणं दीपतां
तप्तायःपतिताम्बुवत् करतले धाराम्बु संलीयते ॥

अत्र प्रस्तुतादेव सन्तापकार्य्यादुपवर्णितात् प्रस्तुत एव सन्तापातिशयोऽवगम्यते। न चेयं पर्य्यायोक्तिः, वाच्यगम्ययोरेकत्वे तदवसरात्। नाप्यनुमानं, साध्यसाधनयोर्द्वयोरवचनात्। न खल्वप्यप्रस्तुतप्रशंसा, सन्तापातिशयस्यापि प्रस्तुतत्वात्। वैचित्र्यान्तरस्यात्र स्फुटमवगतेश्च। यथा वा,

अनेन पर्य्यासयताऽश्रुविन्दून्
मुक्ताफलस्थूलतमान् स्तनेषु।
प्रत्यर्पिताः शत्रुविलासिनीना-
मुन्मुच्य सूत्रेण विनैव हाराः ॥

अत्र राज्ञः प्रभवातिशयवर्णनं प्रस्तुतम्। तत्र च शत्रु-विलासिनीनां रोदनात् प्रस्तुतादेव शत्रूणां मारणं प्रस्तुतमेवाव-गम्यते। यथा वा,

रात्रिः शिवा काचन सन्निधत्ते
विलोचने, जाग्रतमप्रमत्ते।
समानधर्म्मा युवयोः सकाशे
सखा भविष्यत्यचिरेण कश्चित्॥

अत्र शिवरात्रिमाहात्म्यवर्णने ललाटलोचनवत् शिवसारूप्यं प्रस्तुतमेव ततः प्रतीयते।

## अप्रस्तुतादप्रस्तुतस्याप्रस्तुतांकुरः॥ ३६

अप्रस्तुतादुपवर्णितादप्रस्तुतमेव यदवगम्यते स भवेदप्रस्तुतां-कुरोनाम। उदाहरणम्।

आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि, पादपतनेन सहस्ररश्मिः॥

अत्र रविकमलिनीवृत्तान्तेनाप्रस्तुतेनाप्रस्तुतएव नायकयो-र्वृत्तान्तः प्रतीयते। आगस्कारिणं प्रति विनैवानुनयं प्रसन्ना सखी खल्वत्र सख्या उपालभ्यते। सएव चोपालम्भोऽत्र वैधर्म्येण प्रतीयमानः प्रस्तुतः, न पुनः कामिनोर्वृत्तान्तः। यथा वा,

प्रसादयत्येत्य रविः प्रभाते
पादप्रपातैर्नलिनीं मृदुः सन्।
कृतापराधेऽपि विलासिनि, त्वं
प्रिये विनैवानुनयं प्रसन्ना॥

इदं मम। अत्रोत्तरार्द्धे प्रस्तुतस्य स्फुटमभिधानादप्रस्तुतएव कामिनीवृत्तान्तो रविनलिनीवृत्तान्तादप्रस्तुतादुपवर्णितादवगम्यते। न चायं वैधर्म्येण दृष्टान्तः, तथापि अप्रस्तुतादप्रस्तुतप्रतीतेर्वारयितुमशक्यत्वात्। प्रस्तुतादप्रस्तुतस्यावगतौ समासोक्तिः प्रस्तुतावगतौ प्रस्तुतांकुरः, अप्रस्तुतात् प्रस्तुतस्य प्रतीतौ अप्रस्तुतप्रशंसा अप्रस्तुतस्य तथात्वे त्वप्रस्तुतांकुर इत्यमीषां भेदः। वस्तुतस्त्वेकएवालङ्कारः सर्व्वानमून् भेदानभिप्लवते। प्रकारभेदात् किल पृथक् पृथगमीषां व्युत्पादनम्। सर्व्वत्रैव हि संक्षेपणार्थद्वयप्रतिपत्तिरविशिष्टा। तस्मादेकएव समासोक्त्यलङ्कारो बह्वीभिर्भङ्गीभिरुपनिबध्यते।

## एकार्थशब्दैरनेकार्थाभिधानं श्लेषः॥ ३७

एकार्थैरेव शब्दैरनेकोऽर्थो यदभिधीयते स श्लेषः। यत्र खल्वेकेन शब्देनैकएवार्थोऽभिधीयते, स चाभिधीयमानोऽर्थोऽनेकत्र सङ्गच्छते, तत्र भवत्येकार्थैः शब्दैरनेकार्थाभिधानम्। अभङ्गश्लेषे तु नैवम्। तत्र हि भिन्ना एवार्थाः समानरूपैरपि भिन्नैरेव शब्दैरभिधीयन्ते इत्यनयोर्भेदः। उदाहरणम्।

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥

यथा वा,

ध्वान्तं विध्वंसयन्नर्थानप्रकाशान् प्रकाशयन्।
पावयन् भाति नितरां क्रिया धर्म्याः प्रवर्त्तयन्॥

इदं मम। अत्र प्रकरणादिनियमाभावात् द्वावप्यन्यकर्षौ वाच्यौ।

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्त्तयति क्रियाः।
रचयतितरां स्वैराचारप्रवर्त्तनकर्त्तनं
वत वत लसत्तेजःपुञ्जो विभाति विभाकरः॥

इत्यादिकन्त्वस्योदाहरणं न समीचीनमिवाधिगच्छामः। अत्र हि केषाञ्चित् शब्दानामेकार्थत्वेऽप्युदयादिशब्दाः उदयाचलसम्बन्धादिकं, द्वयादिकञ्च प्रतिपादयन्तो न खल्वपरेकार्थाभवन्ति।

## तुल्यानामेकधर्म्माभिसम्बन्धस्तुल्ययोगिता॥ ३८

तुल्यानामर्थात् प्राकरणिकानामेवाप्राकरणिकानामेव वा योऽयमेकेन धर्मेणाभिसम्बन्धः, सा भवेत्तुल्ययोगिता नाम। क्रमेणोदाहरणम्।

सञ्जातपत्रप्रकरान्वितानि
समुद्वहन्ति स्फुटपाटलत्वम्।
विकस्वराण्यर्ककराभिमर्शाद्-
दिनानि पद्मानि च वृद्धिमीयुः॥

यथा वा,

कुमुदानि सरोरुहाणि हंसाः
सलिलान्यग्रचकुलानि चन्द्रमाः ।
विमलान्यभवन् शरत्प्रवृत्तौ
महतामभ्युदये स्फुरन्ति सन्तः ॥

अप्राकरणिकानां खल्वपि ।

नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात् कदलीविशेषाः ।
लब्ध्वाऽपि लोके परिणाहि रूपं
जातास्तदूर्व्वोरुपमानवाह्याः ॥

हिताहितयोर्वृत्तितौल्यमप्येके ॥ ३९

हिते अहिते च येयं तुल्या वृत्तिस्तामपि तुल्ययोगिता-मेके मन्यन्ते। उदाहरणम् ।

नीतिशास्त्रप्रवीणेन लोकवृत्तानुसारिणा ।
प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया ॥

अत्र पराभूतिशब्दः श्लिष्टः। यथावा,

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥

यथा वा,

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैः सर्व्वस्य कटुरेव सः ॥

अत्र पादत्रये यथाक्रमं छिनत्ति सिञ्चति अर्च्चयतीत्यध्याहृत्य वाक्यानि पूरणीयानि ।

## दीपकमतुल्यानाम् ॥ ४०

इहैकधर्म्माभिसम्बन्ध इत्यनुवर्त्तते । अतुल्यानां प्राकरणिकानामप्राकरणिकानाञ्च योऽयमेकधर्म्माभिसम्बन्धस्तद्दीपकम् । उदाहरणम् ।

सङ्गतानि मृगाक्षीणां तड़िद्विलसितानि च ।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥

अत्र घनशब्दः श्लिष्टः । यथा वा,—

कृपणानां धनं नागानां फणमणिः केशराश्च सिंहानाम् ।
कुलबालिकानाञ्च स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥

यथा वा,

मणिः शाणोल्लीढ़ः समरविजयी हेतिदलितो-
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥

एवं,

चन्द्रे कलङ्कः सुजने दरिद्रता
विकाशलक्ष्मीः कमलेषु चञ्चला ।
मुखाप्रसादः स्वजनेषु सर्व्वदा
यशोविधातुः कथयन्ति खण्डितम् ॥

इत्यादि भङ्ग्यन्तरैरप्ययमलङ्कारो निबध्यते ।

## कारकस्त्वेकमनेकासु क्रियासु ॥ ४१

अनेकासु क्रियासु यदेकं कारकमभिसम्बध्यते, तदपि दीपकमाचक्षते । उदाहरणम् ।

निद्राति स्नाति भुङ्क्ते चलति कचभरं शोधयत्यन्तरास्ते
दीव्यत्यक्षैर्न चायं गदितुमवसरो भूय आयाहि याहि ।
इत्युद्दण्डैः प्रभूणामसकृदधिकृतैर्वारितान् द्वारि दीना-
नस्मान् पश्याब्धिकन्ये, सरसिरुहरुचामन्तरङ्गैः कटाक्षैः ॥

अत्र निद्रातीत्यादावेकः प्रभुः कर्त्ता, आयाहि याहीत्यनयो-श्चैकोयाचकः । यथा वा,

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीड़न्ति धनिनोऽर्थिभिः ॥

परमार्थतः क्रियाया एकत्वे शब्दभेदेनोपादानेऽप्ययमलङ्कारः प्राच्यैरुररीकृतः । यथा,

हरत्याभोगमाशानां गृह्णाति ज्योतिषां गणम् ।
आदत्ते चाद्य मे प्राणानसौ जलधरावली ॥

अत्रैकैव क्रिया हरति गृह्णात्यादत्ते इत्यनेकैः शब्दैरुक्ता ।

अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव च ।
दीपकस्थानएवेष्टमलङ्कारत्रयं यथा ।

इत्याचार्य्याः । क्रमेणोदाहरणम् ।

विकसन्ति कदम्बानि स्फुटन्ति कुटजद्रुमाः ।
उन्मीलन्ति च कन्दल्यो दलन्ति ककुभानि च ॥

विकासादिरर्थत एक एवेत्यर्थावृत्तिरियम् ।

उत्कण्ठयति मेघानां माला वृन्दं कलापिनाम् ।
यूनाञ्चोत्कण्ठयत्येष मानसं मकरध्वजः ॥

उत्कण्ठयतीत्येकत्रोर्द्ध्वग्रीवं करोत्यन्यत्रोत्सुकं करोतीत्यर्थभेदात् शब्दावृत्तिरियम् ।

जित्वा विश्वं भवानद्य विहरत्यवरोधनैः ।
विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥

विहरतीत्यस्योभयत्राप्येकार्थत्वादुभयावृत्तिरियम् । आवृत्तित्रयमेव दीपकभेदरूपमिति भोजदेवादयः । प्रकारभेदादेवममीषां पृथगुपदेशः, एकएव त्वलङ्कारः बहुमुखः प्रथते इत्यनुचिन्तनीयम् ।

## पूर्व्वपूर्वस्योत्तरोत्तरोपकारोमालादीपकम् ॥ ४२

पूर्व्वेण पूर्व्वेण यदुत्तरमुत्तरमुपक्रियते, तन्मालादीपकमित्याख्यते । उदाहरणम् ।

संग्रामाङ्गनमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद् यत् समासादितम् ।
कोदण्डेन शरः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्त्या च लोकत्रयम् ॥

## यथापूर्व्वमुत्तरस्य स्थापनमपोहनं वैकावली ॥ ४३

पूर्व्वं पूर्व्वं प्रत्युत्तरमुत्तरं यत् स्थाप्यतेऽपोह्यते वा, सेयं द्विविधा भवत्येकावली नाम । स्थापनमपोहनञ्च विशेषणभावेनेत्याहुः । क्रमेणोदाहरणम् ।

सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयम् ॥

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ॥

पूर्व्ववाक्ये विशेष्यस्याप्युत्तरत्र विशेषणतया स्थापनं दृश्यते । यथा,

वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु ।
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम् ॥

यथा वा,

धर्मेण बुद्धिस्तव देव, शुद्धा
बुद्ध्या निबद्धा सहसैव लक्ष्मीः ।
लक्ष्म्या च तुष्टा भुवि सर्व्वलोका-
लोकैश्च नीता भुवनेषु कीर्त्तिः ॥

एवमन्यत्राप्यनुसन्धेयम् । सोऽयं पूर्व्वपूर्व्वस्योत्तरोत्तराभिसम्बन्धो मालादीपकं न त्वियमेकावली । अस्यैकावलीत्वाभ्युपगमे तु मालादीपकं न पृथग्लक्षणीयम् । मालादीपकेनैव वा गतार्थत्वादियमेकावली नाभ्युपगन्तव्या भवति । पूर्व्वेषामुत्तरेषाञ्च भूम्नाऽभिसम्बन्धः खल्वलङ्कारभूमिः । स च पूर्व्वपूर्व्वेणोत्तरोत्तरस्योत्तरोत्तरेण वा पूर्व्वपूर्व्वस्य । अन्योऽपि स्थापनेनापोहनेन वेत्येक एवालङ्कारो लक्षणभेदात् पृथगुपदिष्टः । गृहीतमुक्तरीत्याऽर्थश्रेणिरेकावलीति दीक्षितैरप्युक्तम् । उत्तरोत्तरस्य

पूर्व्वंपूर्व्वंविशेषणाभावः पूर्व्वपूर्व्वस्योत्तरोत्तरविशेषणाभावो वा गृहीतमुक्तरीतिरित्याहुः। गृहीतमुक्तरीतौ सत्यां क्रियाभेदे एकावली क्रियैकत्वे मालादीपकमिति केचित् समर्थयन्ते।

## अन्यसहितस्यान्याभिसम्बन्धः सहोक्तिः॥ ४४

अन्येन सहितं किञ्चिदन्येन यदभिसम्बध्यते, सेयं सहोक्तिः। उदाहरणम्।

समसेव नराधिपेन सा
गुरुसम्मोहविलुप्तचेतना।
अगमत् सह तैलविन्दुना
तनुदीपार्च्चिरिव क्षितेस्तलम्॥

विशेषणसहितस्य विशेष्यस्यान्याभिसम्बन्धे पुत्रेण सहैव पितरं पश्यति इत्यादौ च वैचित्र्याभावान्नायमलङ्कारः। वैचित्र्यं ह्यलङ्कारः। अन्यसहितस्येत्यनेन सहार्थस्य विवक्षितत्वाच्च नान्यत्र प्रसङ्गः।

मधुमासनिशारम्भे शशांककिरणोज्ज्वले।
संकुचन्त्यम्बुजातानि हृदयेन वियोगिनाम्॥

इत्यादौ सहार्थशब्दप्रयोगाभावेऽप्ययमलङ्कारो दृश्यते।

वसन्तसहितस्यैव कामस्य प्रथते बलम्।
दारुणा सहितस्यैव तेजः स्फुरति शुष्मणः॥
दुर्म्मन्त्रिभिः परिवृतो राजा भवति किल्विषी।
पयोमुचा परित्यक्तः शुचिरेव हि चन्द्रमाः॥

इत्यादि भङ्ग्यन्तरेणापययमलङ्कारो निबध्यते। तदिदमुदाहरणद्वयं विनोक्तिप्रतिद्वन्द्विभूतां सहोक्तिमधिकरोति।

अन्येन विनाऽन्यस्य शोभनत्वाशोभनत्वे
विनोक्तिः॥ ४५

केनचिद्विना कस्यचित् शोभनत्वमशोभनत्वं वा यद्भवति, सा भवेद्विनोक्तिर्नाम। क्रमेणोदाहरणम्।

मृगलोचनया विना विचित्र-
व्यवहारप्रतिभाप्रभाप्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं
सुहृदा तेन विना नरेन्द्रसूनुः।

यथा वा,

आविर्भूते शशिनि तमसा रिच्यमानेव रात्रिः
नैशस्यार्च्चिर्हुतभुज इव छिन्नभूयिष्ठधूमा।
मोहेनान्तर्वरतनुरियं लच्यते मुक्तकल्पा
गङ्गारोधःपतनकलुषा गृह्णतीव प्रसादम्॥

अत्र तमःप्रभृतिकं विना रात्र्यादीनां रमणीयत्वं विनाशब्दप्रयोगमन्तरेणैव प्रदर्शितम्। अशोभनत्वं खल्वपि।

अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम्।
का दिनश्रीर्विनाऽर्केण का निशा शशिना विना॥

अरुचिर्निशया विना शशी
शशिना साऽपि विना महत्तमः ।
उभयेन विना मनोभव-
स्फुरितं नैव चकास्ति कामिनोः ॥

## साधनेन साध्यावगतिरनुमानम् ॥ ४६

साधनेन यत् साध्यमवगम्यते, तदनुमानम् । उदाहरणम् ।

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्म्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपदलनैः
कृशाङ्ग्याः सन्तापं वदति विसिनीपत्रशयनम् ॥

यथा वा,

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति सन्ततममी मर्म्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो-
धावत्यग्रत एव शासनधरः सत्यं सदाऽऽसां स्मरः ॥

न चेयमुत्प्रेक्षा, तस्याः सम्भावनारूपतया निश्चितत्वेन प्रतीतावप्रवृत्तेः । यथा वा,

प्रलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसत्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥

## अन्यव्यवच्छेदायान्यानुकीर्त्तनं परिसंख्या ॥ ४७

परिकीर्त्तितादन्यस्य व्यवच्छेदमभिप्रयता यदन्योऽनुकीर्त्त्यते, सा परिसंख्या। अनुकीर्त्तनञ्चेदं प्रश्नपूर्व्वकमन्यथा वा। अन्य-व्यवच्छेदोऽपि शाब्द आर्थो वा। सेयं चतुर्व्विधा भवति परि-संख्या। क्रमेणोदाहरणम्।

किं भूषणं सुदृढ़मत्र यशो न रत्नं
किं कार्य्यमार्य्यचरितं सुकृतं न दोषः।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम्॥

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधि विमुक्तौ प्रभवति॥

भक्तिर्भवे न विभवे
व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि
प्रायः परिदृश्यते महताम्॥

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम्।
भक्तिश्चक्रिणि शक्तिरात्मदमने संसर्गमुक्तिः खले
एते यत्र वसन्ति निर्म्मलगुणास्तेभ्यो नरेभ्यो नमः॥

यथा वा,

बलमार्त्तभयोपशान्तये
विदुषां सम्मतये बहु श्रुतम् ।
वसु तस्य विभोर्न केवलं
गुणवत्ताऽपि परप्रयोजना ॥

## कैमुत्यन्यायेनार्थप्रतिपादनमर्थापत्तिः ॥ ४८

अन्यसिद्धावन्यस्यार्थतः सिद्धिः कैमुत्यन्यायः । इयमेव दण्डापूपिकेत्युच्यते । तेन यदर्थः प्रतिपद्यते सा भवेदर्थापत्तिः । उदाहरणम् ।

प्रसह्य योऽस्मासु परैः प्रयुक्तः
स्मर्त्तुं न शक्यः किमुताधिकर्त्तुम् ।
नवीकरिष्यत्युपशुष्यदार्द्रः
स त्वद्विना मे हृदयं निकारः ॥

यस्य स्मरणमपि दुःसहं तस्यानुभवः सुतरां दुःसह इति किमु वक्तव्यमित्यभिप्रायः । यथा वा,

विललाप स वाष्पगद्गदं
सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्द्दवं
भजते कैव कथा शरीरिषु ॥

केचित् प्रत्यक्षादीन्यपि प्रमाणान्यलंकारतयेच्छन्ति । तत्र प्रत्यक्षं यथा,

क्रान्तकान्तवदनप्रतिबिम्बे
मग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते
निर्व्ववार मधुनीन्द्रियवर्गः ॥

अत्रेन्द्रियनिर्वृत्या प्रत्यक्षमलंकारः । अनुमानन्तूदाहृतम् ।

उपमानं यथा,

तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।
यस्तन्वि, तारकान्यासः शकटाकारमाश्रितः ॥

यथा वा,

अत्र मन्मथमिवातिसुन्दरं
दानवारिमिव दिव्यतेजसम् ।
शैलराजमिव धैर्य्यशालिनं
वेद्मि वेङ्कटपतिं महीपतिम् ॥

शाब्दो यथा,

विवक्षता दोषमपि च्युतात्मना
त्वयैकमीशं प्रति साधु भाषितम् ।
यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो भविष्यति ॥

सदाचारो यथा,

महाजनाचारपरम्परेदृशी
स्वनाम नामाददते न साधवः ।
अतोऽभिधातुं न तदुत्सहे पुन-
र्जनः किलाचारमुचं विगायति ॥

आत्मतुष्टिर्यथा,

असंशयं क्षत्रपरिग्रहक्षमा
यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥

अर्थापत्तिर्यथा,

व्यक्तं बलीयान् यदि हेतुरागमा-
दपूरयत् सा जलधिं न जाह्नवी ।
गङ्गौघनिर्भर्त्सितशम्भुकन्धरा-
सवर्णमर्णः कथमन्यथाऽस्य तत् ॥

पूर्व्वा खल्वर्थापत्तिः कैमुत्यन्यायेनार्थप्रतिपादनमियन्त्वनुपपत्तिनिबन्धनं कस्यचिदर्थस्य कल्पनमित्यनयोर्भेदः । अनुपलब्धिर्यथा,

स्फुटमसदवलग्नं तन्वि, निश्चिन्वते ते
तदनुपलभमानास्तर्कयन्तोऽपि लोकाः ।
कुचगिरिवरयुग्मं यद्विनाऽऽधारमास्ते
तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥

सम्भवो यथा,

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्म्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

यथा वा,

भ्रातः पान्थ, कुतो भवान्, नगरतो वार्त्ता नवा वर्त्तते
वाढं, ब्रूहि, युवा पयोदसमये त्यक्त्वा प्रियां जीवति ।
सत्यं जीवति, जीवतीति कथिता वार्त्ता मयाऽपि श्रुता
विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न सम्भाव्यते ॥

ऐतिह्यं खल्वपि ।

कल्याणी वत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥

लौकिकी गाथेयमित्यनिर्द्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यं दर्शितम् । तद्वैऽतिह्यम् । इति होचुर्वृद्धा इति ।

## उत्तरोत्तरमुत्कर्षः सारः ॥ ४९

वस्तूनामुत्तरोत्तरमुत्कर्षो यदुपनिबध्यते, सोऽयं सारो नाम । उदाहरणम् ।

मनुष्याः प्राणिषु श्रेष्ठा मनुष्येषु द्विजातयः ।
द्विजातिष्वपि विद्वांसस्तेषु तत्त्वविदः पराः ॥

यथा वा,

लोकस्रजि द्यौर्दिवि चादितेया-
अप्यादितेयेषु महान् महेन्द्रः ।
किं कर्त्तुमर्थी यदि सोऽपि रागा-
ज्जागर्त्ति कक्षा किमतः पराऽपि ॥

एतद्दर्शनात् परावधिरिति न वाच्यम् । श्लोकार्द्धस्य परावधिरत्नाप्यस्त्येवेति केचित् समर्थयन्ते ।

अत्र श्लाघ्यगुणानामुत्कर्षः । अश्लाघ्यगुणानां खल्वपि ।

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः।
वायुना किं न नीतोऽसौ मामयं प्रार्थयिष्यति॥

## उत्तरात् प्रश्नोन्नयनमुत्तरम्॥५०

उत्तरश्रवणात् प्रश्नो यदुन्नीयते, तदुत्तरं नामालङ्कारः। उदाहरणम्।

न नौका न प्लवो वाऽस्ति न सेतुर्न च संक्रमः।
किन्तु यत्र ध्वजः प्रांशुस्तत्रेयं सुतरा सरित्॥

अनेन पान्थस्य सरित्तरणोपायप्रश्न उन्नीयते। न चेद-मनुमानं, साध्यसाधनयोर्द्वयोरनिर्द्देशात्। नापि काव्यलिङ्गम्। न ह्युत्तरं प्रश्नस्य हेतुः।

## प्रश्नपूर्व्वकमसकृदसम्भाव्यमुत्तरमेकेषाम्॥५१

प्रश्नपूर्व्वकं सर्व्वजनेष्वसम्भाव्यमुत्तरमसकृत् यदुपनिबध्यते, तदप्युत्तरमित्येकेषां मतम्। उदाहरणम्।

का विषमा दैवगतिः किं लब्धव्यं जनोगुणग्राही।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलोलोकः॥

## साकूतमुत्तरमप्येके॥५२

अभिप्रायगर्भं यदुत्तरमुपनिबध्यते, तदप्युत्तरमित्येके मन्यन्ते। उदाहरणम्।

कुशलन्तस्याः, जीवति, कुशलं पृच्छामि, जीवतीत्युक्तम्।
पुनरपि तदेव कथयसि, मृतां नु कथयामि या श्वसिति॥

अत्र जीवन्त्यास्तस्याः कुतः कुशलमित्याद्यभिप्रायगर्भं जीवतीत्याद्युत्तरम् ।

## प्रश्नवाक्यस्योत्तरपरतया योजनञ्च ॥ ५३

प्रश्नवाक्यमेवोत्तरपरतया यद् योज्यते, तदप्युत्तरमित्येके । उदाहरणम् ।

का काली का मधुरा का शीतलवाहिनी गङ्गा ।
के दारपोषणरताः कं बलवन्तं न बाधते शीतम् ॥

अत्र प्रश्नवाक्यान्येवोत्तरपरतया योजितानि ।

## सामान्यविशेषकार्य्यकारणेभ्यस्तदन्यसमर्थनमर्थान्तरन्यासः ॥ ५४

सामान्येन विशेषः, विशेषेण सामान्यं, कार्य्येण कारणम्, कारणेन कार्य्यञ्च यत् समर्थ्यते, सोऽयमर्थान्तरन्यासः । समर्थनं नाम लब्धात्मनोऽर्थस्य निदर्शनाद्युपन्यासेन दृढ़ीकरणम् । काव्यलिङ्गे तु हेत्वपेक्षोऽर्थस्यात्मलाभः । समर्थ्यसमर्थकयोर्द्वयोरपि तुल्यरूपत्वे ; सामान्यरूपत्वे विशेषरूपत्वे वा साधारणधर्म्मस्य भेदाभेदाभ्यां दृष्टान्तप्रतिवस्तूपमयोरवसरः, अतुल्यरूपत्वे त्वस्येत्यमीषां भेदः । अयञ्च साधर्म्यवैधर्म्याभ्यां प्रत्येकं द्विधा भिद्यमानोऽष्टप्रकारः सम्पद्यते । क्रमेणोदाहरणम् ।

तुङ्गानामपि मेघाः शैलानामुपरि निदधते च्छायाम् ।
उपकर्त्तुं हि समर्था भवन्ति महतां महीयांसः ॥

अत्र सामान्येन विशेषस्य समर्थनम् । एष साधर्म्येण । वैधर्म्येण यथा,

अहो हि मे बह्वपराद्धमायुषा
यदप्रियं वाच्यमिदं मयेदृशम् ।
तएव धन्याः सुहृदः पराभवं
जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥

अत्रोत्तरार्द्धगतेन सामान्येनार्थेन पूर्व्वार्द्धगतो विशेषोऽर्थो वैधर्म्येण समर्थ्यते ।

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥

अत्र पूर्व्वार्द्धगतः सामान्योऽर्थः परार्द्धगतेन विशेषेणार्थेन समर्थ्यते । एष एव वैधर्म्येण यथा,

हृदयेन निर्वृतानां भवति नृणां सर्व्वमेव निर्वृतये ।
इन्दुरपि तथाहि मनः खेदयतितरां प्रियाविरहे ॥

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणो-
गुणलुब्धाः स्वयमेव सम्पदः ॥

अत्र पूर्व्वार्द्धे वैधर्म्येणोत्तरार्द्धे तु साधर्म्येण कार्य्येण कारणं समर्थ्यते ।

पृथ्वि, स्थिरा भव भुजङ्गम, धारयैनां
त्वं कूर्म्मराज, तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः, कुरुत तत्त्रितये दिधीर्षा-
मार्य्यः करोति हरकार्म्मुकमाततज्यम् ॥

पृथ्व्या...ां स्थैर्य्यस्य सिद्धतया तद्विधानासम्भवात् स्थैर्य्यादि विशेषोऽत्र विवक्षणीयः। स च हरकार्मुकाततज्योकरणेन समर्थ्यते। यथा वा,

अपसर परभृत, दूरं गोष्ठीयं काकरवरसिका।
दूर्व्वाचर्व्वणपटवो गावो न जानन्तीक्षुरसमधुरम् ॥

गोष्ठ्याः काकरवरसिकत्वं ह्यत्र परभृतस्यापसरणोपदेशकारणम्। एष एव वैधर्म्म्येण। यथा,

वह्निरिव चिरादनार्य्ये,
विलसत्येष तुषारदीधितिः।
भज सम्मदमत्र सन्ततं
ननु सन्तापमिनः प्रसूयते ॥

चन्द्रस्य सन्तापजनकत्वानुभवेन सम्मदजनकत्वे बाधं प्रतिसन्दधतीं विरहिणीं प्रति सख्या उक्तिरियम्। अत्र सूर्य्यस्य सन्तापजनकत्वप्रदर्शनेन तद्विरुद्धस्य चन्द्रस्य सन्तापविरुद्धसम्मदजनकत्वमुपपन्नमित्याहुः। दण्डिना त्वन्यथैवायमलङ्कारोऽष्टधा विभक्तः। यथा,—

विश्वव्यापी विशेषस्थः श्लेषाविद्धो विरोधवान्।
अयुक्तकारी युक्तात्मा युक्तायुक्तो विपर्य्ययः इति ॥

त इमे उक्तेषु भेदेष्वन्तर्भवन्ति, न च वैचित्र्यविशेषं पुष्णन्तीति नोदाहरणोपन्यासेन प्रदर्श्यन्ते। केचित् कार्य्यकारणभावेऽर्थान्तरन्यासं नेच्छन्ति। इच्छन्ति त्वन्ये। वैचित्र्यञ्चात्र सहृदयसंवेद्यम्। त्रिविधः खल्वत्र हेतुरुपपादकः समर्थकोज्ञापकश्च। तत्रोपपादकः काव्यलिङ्गस्य, समर्थकोऽर्थान्तर-

न्यासस्य, ज्ञापकश्चानुमानस्य विषयः। यत्र हि हेतुमन्तरेण वाक्यार्थो नोपपद्यते, तत्रोपपादकेन हेतुना तदुपपाद्यते। तत्र काव्यलिङ्गमलङ्कारः। यत्र पुनरन्तरेणैव हेतुं स्वतः पर्य्यवसितो-वाक्यार्थः समर्थ्यते, तत्रार्थान्तरन्यासः। कार्य्यकारणभावेऽर्था-न्तरन्यासस्य काव्यलिङ्गस्य च वैचित्र्येनच्छ्यमगन्यापकत्वमल-ङ्कारभेदं प्रयोजयति। अन्ये त्वाहुः। समर्थ्यसमर्थकयोः सामान्य विशेषसम्बन्धेऽर्थान्तरन्यासस्तदितरसम्बन्धे काव्यलिङ्गमिति। सेयं निर्व्वासना कल्पना। वैचित्र्यविशेषस्य प्रयोजकत्वे तु कार्य्यकारणसम्बन्धे चेत्यपि वक्तव्यं भवत्यविशेषात्। रुद्रटमतानु-यायिनस्तु द्वयोरुपमानोपमेयरूपत्वसम्भवएवार्थान्तरन्यासमङ्गी-कुर्व्वाणाः,—

> प्रियेण संग्रथ्य विपक्षसन्निधा-
> वुपाहितां वक्षसि पीवरस्तने।
> स्रजं न काचिद्विजहौ जलाविलां
> वसन्ति हि प्रेम्णि गुणा न वस्तुनि॥

इत्यादावुपमानोपमेयभावाभावादर्थान्तरन्यासाभासमाहुः। भामहादिमते त्वर्थान्तरन्यास एवायम्। उपमानोपमेययो तादृप्येणानिर्द्दिश्य सामान्यधर्म्मस्यानभिधाय द्वयोस्तुल्यकक्षतयो-पन्यासमुभयन्यासाख्यमलङ्कारान्तरं मन्यन्ते रुद्रटप्रभृतयः। उदाहरन्ति च।

> सकलजगत्त्राणकारणविभवा भुवि साधवोऽधुना विरलाः।
> सन्ति कियन्तस्तरवः सुस्वादुसुगन्धिचारुफलाः॥

केचिदर्थान्तरन्यासेऽप्यर्थान्तरन्यासाद्यतिशययोगं विकस्वर-समाख्यमलङ्कारान्तरमाहुः । तस्योदाहरणम् ।

माकन्दं मकरन्दतुन्दिलममुं गाहस्व काक, स्वयं
कर्णारुन्तुदमन्तरेण रणितं त्वां मन्महे कोकिलम् ।
धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालभालपतिते पङ्के न्यंकेत कः ॥

अत्र धन्यानि स्थलवैभवेनेत्यर्थान्तरन्यासमुपन्यस्यताऽप्यपरितुष्यता कविना कस्तूरिकामित्यर्थान्तरन्यासान्तरमुपन्यस्तम् ।
एवं,

स विश्वजितमाजह्ने क्रतुं सर्व्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥

इत्यादिकमप्यनुसरणीयम् ।

## उपपादकोहेतुः काव्यलिङ्गम् ॥ ५५

उपपादकोहेतुर्यदुपन्यस्यते, तद्भवेत् काव्यलिङ्गं नाम उपपादकश्च हेतुः क्वचित् पदार्थः, क्वचिद्वाक्यार्थः । यदाहुः,

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति ।

क्रमेणोदाहरणम् ।

भस्मोद्धूलन, भद्रमस्तु भवते रुद्राक्षमाले, शुभं
हा सोपानपरम्परां गिरिसुताकान्तालयालङ्कृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्य्यासुखा-
लोकोच्छेदिनि मोक्षनामनि मोहामोहे निधीयामहे ॥

अत्र मोक्षस्य महामोहत्वमुच्यमानं प्रस्खलद्रूपं युष्मत्सपर्य्यासुखालोकोच्छेदिनीत्यनेन पदार्थेनोपपाद्यते ।

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे, न प्रायः क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिभाक्
महेश, क्षन्तव्यं तदिदमपराधद्वयमपि ॥

अत्रापराधद्वये पूर्व्वापरजन्मनोरनमनं वाक्यार्थौ हेतुः । यथा वा,

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटवटुवेशापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥

एवं,

हे गोदावरि, देवि, तावकतटोद्देशे कलिङ्गः कवि-
र्वाग्देवीं बहुदेशदर्शनसखीं त्यक्त्वा विरक्तिं गतः ।
एनामर्णवमध्यसुप्तसुरभिन्नाभीसरोजासनं
ब्रह्माणं गमय क्षितौ कथमसावेकाकिनी स्थास्यति ॥

इत्यादावप्ययमलङ्कारः । ब्रह्मणोविशेषणतयोपात्तस्यार्णवमध्यत्वादेरनुपादाने हि वाग्देव्या ब्रह्मप्रापणं गोदावर्य्या असम्भवत् नात्मानमासादयितुमुत्सहते । तदुपादाने तूपपद्यते वाक्यार्थः । सोऽयं वाक्यार्थस्योपपादको हेतुः काव्यलिङ्गं, न त्वयं विघटमानार्थघटनात्मा श्लेषाख्यो गुणः । अयमेव हेत्वलङ्कार इत्याचार्य्यादयः । रुद्रटादयस्तु हेतुमता सह हेतोरभेदाभि-

धानं हेतुरित्यलङ्कारान्तरमाहुः । आयुर्घृतमित्यादिलक्षणो ह्ययं न वैचित्र्यावानिति तु मम्मटभट्टादयः । भामहप्रभृतयोऽप्यस्याल-ङ्कारत्वं नेच्छन्ति । प्रकारान्तरेण तु हेत्वलङ्कारो वक्ष्यते ।

साभिप्रायोक्तिः परिकरः ॥ ५६

साभिप्रायं यदुच्यते, सोऽयं परिकरः । उदाहरणम् ।

वितर वितर वाचं क्वासि मुग्धे, किमेतत्
विरमतु परिहासः सर्व्वथा दुःखितोऽस्मि ।
त्वमसि ननु तनूजा हन्त सर्व्वंसहायाः
सुतविरहविमुक्तप्राणराजात्मजोऽहम् ॥

अत्र सर्व्वंसहादिपदान्यभिप्रायगर्भाणि । यथावा,

तव प्रमादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्य्यां हरस्यापि पिनाकपाणे-
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये ॥

अत्र कुसुमायुधोऽपि पिनाकपाणेरिति च विशेषणमभिप्राय-गर्भमात्मनोलोकोत्तरधनुर्धरत्वमावेदयति । नेदं काव्यलिङ्गं । न हि हरस्य पिनाकपाणित्वं धैर्य्यच्युतिकरणे हेतुः । तस्मात् पृथगेव परिकरः काव्यलिङ्गात् । यत्र विशेषणबलात् प्रतीय-मानोऽर्थो वाच्यस्योपकरोति तत्र परिकरः, यत्र पुनर्वाच्य एवार्थ-स्तथा तत्र काव्यलिङ्गमित्यप्याहुः । कदाचिदनयोर्लक्षणयोरेकत्र प्रवृत्तौ सङ्कीर्य्येते एवैतावलंकारौ । इयं साभिप्राया विशे-षणोक्तिः । विशेष्यस्यापि साभिप्रायोक्तिर्दृश्यते । यथा,

फणीन्द्रस्ते गुणान् वक्तुं लिखितुं हैहयाधिपः ।
द्रष्टुमाखण्डलः शक्तः क्वाहमेष क्व ते गुणाः ॥

अत्र फणीन्द्रहैहयाधिपाखण्डलपदानि सहस्रवदनत्व सहस्रबाहुत्व सहस्रलोचनत्वाभिप्रायगर्भाणि ।

यथावा

अनवद्यमिदं रूपमरविन्देन्दुसुन्दरम् ।
साक्षादनन्यसामान्यं कपाली क्वयमर्हति ॥

इदं मम । अत्र कपालिपदमभिप्रायविशेषगर्भम् । एवं,

इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥

इत्यादिकमपुदाहार्य्यम् । अपरे तु साभिप्रायविशेषणत्वमात्रं परिकरमाहुः । केचित् पुनः साभिप्रायविशेषणत्व परिकरः साभिप्रायविशेष्यत्वन्तु परिकरांकुर इति वदन्ति ।

## कारणाभावे कार्य्योत्पत्तिर्विभावना ॥ ५७

प्रसिद्धकारणस्याभावेऽपि कार्य्यस्योत्पत्तिर्योपनिबध्यते सेयं विभावना । सा खल्वियं कारणमन्तरेणोपनिबध्यमानाऽपि कार्य्योत्पत्तिः किमपि कारणमनपेक्ष्यासम्भवन्ती विशेषेण तद्भावयत्यवगमयतीति विभावनोच्यते । उदाहरणम् ।

असम्भृतं मण्डनमङ्गयष्टे-
रनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात्परं साऽथ वयः प्रपेदे ।

यथा वा

जाता ते सखि, साम्प्रतमश्रमपरिमन्थरा गतिः किमियम् ।
कस्मादभवदकस्मादियममधु मदालसा दृष्टिः ॥

## सति कारणे कार्य्यानुत्पत्तिर्विशेषोक्तिः ॥ ५८

कारणे सत्यपि कार्य्यस्यानुत्पत्तिर्यदुपनिबध्यते, सा खल्वियं विशेषोक्तिर्नाम । उदाहरणम् ।

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा न तथापि समागमः ॥

यथावा

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरताऽपि तनुं यस्य शम्भुना न हृतं बलम् ॥

## सङ्गत्यभावोऽसङ्गतिः ॥ ५९

कयोश्चित् सङ्गत्यभावो यदुपनिबध्यते, सेयमसङ्गतिः । कार्य्य-कारणयोः समानदेशत्वं, यद्यत्र करणीयं भवति तत्रैव तस्य करणं, यत्कर्त्तुं प्रवृत्तस्तस्यैव न जातुचित्तद्विरुद्धस्य करणञ्च भवति चेत्, भवति तदा सङ्गतिरित्यभियुक्ता मन्यन्ते । तदेतत् त्रयं सङ्गतिशब्देनेहाभिप्रेयते । सङ्गत्य भावोऽप्यनेनैवावगन्तव्यः ।

तथाच कार्य्यकारणयोर्भिन्नदेशत्वं अन्यत्र करणीयस्यान्यत्र करणं अन्यत् कर्त्तुं प्रवृत्तस्यानन्यस्य तद्विरुद्धस्य करणञ्चेति त्रिविधा भवत्यसङ्गतिः। क्रमेणोदाहरणम्।

अहो खलभुजङ्गस्य विचित्रोऽयं वधक्रमः।
अन्यस्य दशति श्रोत्रमन्यः प्राणैर्विमुच्यते॥
अपराजितां वसुधां चिकीर्षुर्द्यां तथा क्षथाः।
गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराऽकरोः॥

पूर्व्वार्द्धं द्वितीयस्योत्तरार्द्धन्तु तृतीयस्य प्रकारस्योदाहरणम्।
यथावा,—

त्वत्खड्गखण्डितसपत्नविलासिनीनां
भूषा भवन्त्यभिनवा भुवनैकवीर।
नेत्रेषु कङ्कणमथोरुषु पत्रवल्ली
चोलेन्द्रसिंह, तिलकं करपल्लवेषु॥

इदं द्वितीयस्य प्रकारस्य।

मोहं जगत्त्रयभुवामपनेतुमेत-
दादाय रूपमखिलेश्वर, देहभाजाम्।
निःसीमकान्तिरसनीरधिनाऽमुनैव
मोहं प्रवर्द्धयसि मुग्धविलासिनीनाम्॥

इदं तृतीयस्य। यथावा,—

लघूकरिष्यन्नतिभारभङ्गुरा-
ममूं किल त्वं त्रिदिवादवातरः।
उदूढलोकत्रितयेन साम्प्रतं
गुरुर्धरित्री क्रियतेतरां त्वया॥

कार्य्यकारणयोर्भिन्नदेशत्वमात्रमसङ्गतिरिति तु बहवः प्रतिपन्नाः। तेषामन्यत्र विरोधाभास एवालङ्कारः। दीक्षिताभिस्तु त्रिविधैवासङ्गतिर्व्युत्पादिता ।

## आपाततोविरोधो विरोधाभासः ॥ ६०

यत्र कयोश्चिदापाततोविरोधः प्रतिभाति वस्तुवृत्तेन त्वविरोधएव, सोऽयं विरोधवदाभासते इति विरोधाभासः। अयमेव विरोधालङ्कारः। उदाहरणम् ।

गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः।
विश्वम्भराऽप्यतिलघुर्नरनाथ, तवान्तिके नियतम् ॥

अस्य जात्यादिभेदेन बहवो भेदाः कैश्चिदुपवर्णिताः, न त्वमी वैचित्र्यवन्त इति नेह प्रदर्शिताः। विभावनाविशेषोक्त्यसङ्गतिविषयान् परित्यज्य प्रवर्त्ततेऽयमलंकारः। तत्तद्विषयेषु हि तत्तद्वैचित्र्यैरन्यत्रावकाशमलभमानैरन्यत्र सावकाशमेतद्वैचित्र्यं तिरोधीयते इति न तत्तद्विषयेष्वस्य प्रवृत्तिरिति संकराशंका न करणीया ।

## असम्भाव्यार्थनिष्पत्तिरसम्भवः ॥ ६१

असम्भाव्य एवार्थो यन्निष्पद्यते, सोऽयमसम्भवो नामाऽलंकारः।

उदाहरणम् ।

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः।

क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥

अत्र च सत्यपि विरोधाभासे वैचित्र्यान्तरमलङ्कारान्तरप्रयोजकं सहृदयसंवेद्यम् । विरोधाभासमात्रमपरेऽलंकारमत्र मन्यन्ते ।

## श्लाघ्ययोगः समम् ॥ ६२

कयोश्चित् श्लाघनीयो यः सम्बन्धस्तत् समं नाम । समागमयोर्योगः, कार्य्यकारणयोर्गुणक्रिययोरानुगुण्यं, न परमभीप्सितप्रतिलम्भो यावत्ततोऽप्यधिकस्यार्थस्याधिगमः, अभीप्सितार्थाधिगमश्च इत्येतेऽत्र श्लाघ्ययोगतयाऽभिप्रेयन्ते । श्लाघ्यन्ते खल्वमी योगाः सहृदयधुरीणैः । वक्ष्यमाणविषमालंकारस्यास्य च परस्परप्रतिद्वन्द्विरूपतया चेति योगाः समालंकारभूमयः प्रतिपत्तव्या भवन्ति । क्रमेणोदाहरणम् ।

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥

यथावा,

चित्रं चित्रं बत बत महच्चित्रमेयद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥

कार्य्यकारणयोर्गुणसाम्यं यथा,—

अवदातात् कर्म्मजाताज्जातेयं वसुधाधिप ।
अवदाततरा कीर्त्तिः कुन्देन्दुसदृशी तव ॥

इदं मम । तयोरेव क्रियासाम्यं यथा,—

दवदहनादुत्पन्नो धूमो घनतामवाप्य वर्षैस्तम् ।
यच्छमयति तद्युक्तं सोऽपि च दवमेव निर्दहति ॥

अत्र दहनस्य धूमस्य च स्वप्रभवस्य दवस्य दहनस्य च नाशकता अनुरूपैव क्रिया । यथा वा,

आह्लादयसि राजेन्द्र, यदि त्वं सकलं जगत् ।
यदा त्वत्प्रभवा कीर्त्तिः कथं नाह्लादयिष्यति ॥

ममैतत् । चतुर्थं खल्वपि ।

चातकस्त्रिचतुरान् पयःकणान्
याचते जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा
हन्त हन्त महतामुदारता ॥

यथा वा,

जनस्य साकेतनिवासिनस्तौ
द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी
नृपोऽर्थिकामादधिकप्रदश्च ॥

पञ्चमं यथा,—

पिपासाक्षामकण्ठेन याचितं चाम्बु पक्षिणा ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥

नचात्र समुच्चयएवालंकारः। वैचित्र्यान्तरस्यानुभूयमानस्यापलपितुमशक्यत्वात् ।

## विपरीतो विषमः ॥ ६३

समविपरीतः खल्वलंकारो विषमो भण्यते। विरूपयोः सङ्घटनं, कार्य्यकारणयोर्गुणक्रिययोरननुरूपता, न परमभिलषितफलानवाप्तिर्यावदनर्थाधिगमोऽभिलषितफलानधिगमश्चेत्येवं पञ्चविधः समप्रतिद्वन्द्वी विषमः प्रत्येतव्यः। क्रमेणोदाहरणम् ।

वयं क्व वर्णाश्रमरक्षणोचिताः
क्व जातिहीना मृगजीवितच्छिदः ।
सहापकृष्टैर्महतां न सङ्गतम्
भवन्ति गोमायुसखा न दन्तिनः ॥

अरिकरिकुम्भविदारणरुधिरारुणादतः खड्गात् ।
वसुधाधिपते, धवलं कान्तञ्च यशो बभूव तव ॥

यथावा,—

सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोक्याभरणं प्रसूते ॥

कार्य्यकारणयोः क्रिययोरननुरूपता यथा,—

आनन्दममन्दमिमं कुवलयदललोचने, ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥

चतुर्थो यथा,—

सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥

यथावा,—

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पंकजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥

यथावा,—

खिन्नोऽसि मुञ्च शैलं
बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नविततबाहुषु
गोपेषु हसन् हरिर्जयति ॥

क्वचित् सत्यामपीष्टावाप्तावनिष्टस्याप्यवाप्तिर्दृश्यते । यथा—

पश्चातपत्ररसिके, सरसीरुहस्य
किं बीजमर्पयितुमिच्छसि वापिकायाम् ।
कालः कलिर्जगदिदं न कृतज्ञमज्ञे,
स्थित्वा हरिष्यति मुखस्य तवैव लक्ष्मीम् ॥

अभिलषितफलानधिगमः खल्वपि ।

विद्या सत्कविता तथा सुजनता सेवा तथा प्रार्थना
पञ्चैताः परिणिन्यिरे जनयितुं वित्तात्मजं योषितः ।
व्यापारान् परिहृत्य हन्त विषये तत्रैव रेमे मुहु-
र्दुर्दैवेन दुरात्मना विदधिरे पञ्चैव वन्ध्याः स्त्रियः ॥

यथावा,

नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिना वयम् ॥

द्वितीयतृतीयोदाहरणपर्य्यालोचनया सुव्यक्तमिदमवगम्यते यद्विशेषोक्तेरप्ययमतिरिच्यते प्रकारः। न हि द्वितीयोदाहरणे यथावद्धेतुसम्पत्तिः। तृतीये तूदाहरणे स्थवीयानस्य विशेषोक्ते र्भेदः। अथापि खल्वभिलषितफलानवाप्तिमात्रादस्य प्रवृत्ति-र्व्विशेषोक्तेस्तु सति हेतौ फलाभावमात्रेणेत्यन्य एवायं प्रकार आदरणीयः। वैचित्र्यान्तरं चात्र सहृदयसंवेद्यम्। एवं,

लोके कलङ्कमपहातुमयं मृगांको-
जातो मुखं तव पुनस्तिलकच्छलेन ।
तत्रापि कल्पयसि तन्वि, कलंकरेखां
नार्य्यः समाश्रितजनं हि कलंकयन्ति ॥

दृष्ट्वा स्फीतोऽभवदलिरसौ लेखपद्मं विशालं
चित्रं चित्रं किमिति किमिति व्याहरन् निष्पपात ।
नास्मिन् गन्धो न च मधुकणो नास्ति तत् सौकुमार्य्य-
मालोच्यैवं पुनरपि गतः फुल्लमम्भोजमेव ॥

इत्यादिकमप्युदाहार्य्यम्। विशेषोक्त्या त्वपरे गतार्थत्वमस्य मन्यन्ते।

विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा ॥

इत्यादि भङ्ग्यन्तरेणाप्ययमलंकारो निबध्यते।

## निन्दास्तुतिभ्यां स्तुतिनिन्दयोरवगति-र्व्याजस्तुतिः॥ ६४

तत्र निन्दया स्तुतेरवगमो यथा,—

छित्वा त्वामुपरोधबन्ध्यमनसां मन्ये न मौलिः परो-
लज्जावर्ज्जनमन्तरेण न रमामन्यत्र संदृश्यते।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः॥

यथावा,—

पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते।
राजन्निक्ष्वाकुवंशस्य किमिदं तव युज्यते॥

यथावा,—

प्रियोऽसि प्राज्ञोऽसि प्रभुरसि कुलीनोऽपरसि युवा
युवत्यस्त्वामेवं कति न पतिमुर्व्वीश, वृणते।
अतस्त्वेतां कीर्त्तिं रघुनहुषमान्धातृमहिषीं
परामष्टुं वृद्धामधिगतनयोनार्हति भवान्॥

अत्र रघुनहुषादिवत्ते कीर्त्तिरिति स्तुतिरवगम्यते। निन्दा-चात्र भङ्ग्यन्तरेणोपात्ता। यथावा,—

इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारि-
र्दिङ्नागानां मदजलमसीभाञ्जि गण्डस्थलानि।
अद्याप्युर्व्वीवलयतिलक, श्यामलिम्नाऽनुलिप्ता
न्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः॥

अत्रान्यत् सर्वं धवलितमिति स्तुतिरवगम्यते। स्तुत्या निन्दाऽवगमो यथा—

हे हेलाजितबोधिसत्त्व, वचसां किं विस्तरैस्तोयधे,
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः॥

क्वचित् स्तुत्याऽपि स्तुतिरवगम्यते। यथा—

शिखरिणि क्व नु नाम कियच्चिरं
किमभिधानमसावकरोत्तपः।
तरुणि, येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः॥

अत्र शुकशावकस्तुत्या नायिकाऽधरस्तुतिरतिशयेनावगम्यते। एवं निन्दया निन्दाऽवगमोऽपि। यथा,—

विधिरेव विशेषगर्हणीयः
करट, त्वं रट कस्तवापराधः।
सहकारतरौ चकार यस्ते
सहवासं सरलेन कोकिलेन॥

अत्र विधिनिन्दया करटनिन्दाऽतिशयोऽवगम्यते। तदेतत्, सूत्रे यथासंख्यस्याविवक्षितत्वात् यथेष्टमवगम्यावगमकभावाभ्युपगमात् वैचित्र्यस्य समानरूपत्वाच्चानेनैव संग्रहीतव्यं भवति। अभिधानप्रवृत्तिस्तु छत्रिन्यायेन वा यदृच्छाशब्दतया वा समर्थनीया। व्याजनिन्दानामकमलंकारान्तरमिच्छन्त्यन्ये।

गुणदोषयोर्दोषगुणभावो लेशः ॥ ६५

गुणदोषयोर्दोषगुणभावो यत् प्रकल्प्यते, स लेशः ।

क्रमेणोदाहरणम् ।

अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ।
शुक, पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥

विद्वांसं प्रवसन्तं पुत्रमभिसन्धाय पितुरुक्तिरियम् । न चात्राप्रस्तुतप्रशंसैवालङ्कारः । सत्यामेव तस्यां वैचित्र्यान्तरस्यानुभूयमानस्यालंकारान्तरत्वात् । यथावा,—

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्व्वत्रैव जनापवादचकिताः जीवन्ति दुःखं सदा ।
अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो-
युक्तायुक्तविवेकशून्यहृदयोधन्यो जनः प्राकृतः ॥

पूर्व्वार्द्धे गुणस्य दोषत्वमुत्तरार्द्धे दोषस्य गुणत्वं च कल्पितम् । केचिल्लेशादन्यां व्याजस्तुतिं नेच्छन्ति । यथा तु व्याजस्तुतेर्भिन्नोऽयमलङ्कारस्तथोदाहरणप्रपञ्चेनोपदर्शितम् ।

अन्यस्य गुणदोषाभ्यामन्यस्य गुणदोषावुल्लासः ॥ ६६

अन्यस्य गुणेनान्यस्य गुणो वा दोषो वा, तथाऽन्यस्य दोषेणान्यस्य दोषो वा गुणो वा यदुपनिबध्यते, सोऽयं चतुःप्रकारोभवत्युल्लासः । क्रमेणोदाहरणम् ।

वस्त्रमापस्तिलान् भूमिं गन्धो वासयते यथा ।
पुष्पाणामधिवासेन तथा संसर्गजो गुणः ॥

यथावा,—

काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम्।
अश्माऽपि याति देवत्वं महद्भिः सुप्रतिष्ठितः॥

यथावा,

वन्दनीया जनैः सर्व्वैर्जगत्त्रयधृतिः परा।
अपि मां पावयेत् साध्वी स्नात्वेतीच्छति जाह्नवी॥

अन्यस्य गुणेनान्यस्य दोषो यथा,—

दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्व्विकचपद्मवने चरन्ति॥

अत्र भ्रमराणां गुणेन करिणो दोषः। यथा वा,—

नीतिमार्गप्रवीणेन गूढ़मन्त्रानुसारिणा।
पराजिता वीर्य्यवता शूरेण भवताऽरयः॥

अत्र राज्ञो गुणेनारीणां दोषः। यथा वा,—

समुज्ज्वलं नेत्रहारि हिरण्यमनलप्रभम्।
निष्टप्तमग्नौ सहसा जातं श्यामिकयाऽङ्कितम्॥

अन्यस्य दोषेणान्यस्य दोषो यथा,—

लोकानन्दन, चन्दनद्रुम, सखे, नास्मिन् वने स्थीयतां
दुर्व्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम्।
ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला-
न स्वान्येव कुलानि केवलमिदं सर्व्वं दहेयुर्व्वनम्॥

अत्र वंशानां परस्परनिघर्षसञ्जातानलदोषेण वनस्य दाह-रूपोदोषः। यथावा,

व्यपदेशमाविलयितुं समीहसे मां च नाम पातयितुम्।
कूलङ्कषेव सिन्धुः प्रसन्नमोघं तटतरुञ्च॥

अन्यस्य दोषेणान्यस्य गुणो यथा,

आघ्रातं परिचुम्बितं परिमुहुर्लीढ़ं पुनश्चर्वितं
त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां मा कृथाः।
हे सद्रत्न, तवैतदेव कुशलं यद्वानरेणादरा-
दन्तःसारविलोकनव्यसनिना चूर्णीकृतो नाश्मना॥

अत्र वानरस्य चापलदोषेण मणेश्चूर्णनाभावो गुणत्वेनोप-निबद्धः। यथावा,—

गाढ़े सन्तमसे कान्तिरनलस्य किलोज्ज्वला।
दोषो हि प्रतिपक्षस्य गुणायान्यस्य कल्पते॥

इदं मम। एवं,

तदभाग्यं धनस्यैव तन्नाश्रयति सज्जनम्।
लाभोऽयमेव भूपालसेवकानां न चेद्वधः॥

इत्यादिकमप्युदाहार्य्यम्। अत्र सज्जनानां गुणेन धनस्य तदनाश्रयणं दोषत्वेन, भूपालस्य क्रौर्य्यदोषेण तत्सेवकानां वधाभावएव गुणत्वेन परिवर्णितम्। प्रथमतृतीयौ प्रकारौ विनोक्ति प्रतिपक्षभूतया सहोक्त्या सङ्कीर्य्येते इति न शङ्कनीयम्। तदस-ङ्कीर्णस्यैवोदाहरणस्य दर्शितत्वात्। क्वचित् सङ्करेऽपि चत्वभा-वाच्च। अलंकारएव त्वयमननुमतः प्रायेण प्राचाम्। वैचित्र्य-विशेषसद्भावात् कैश्चिदङ्गीकृतः प्रदर्शितोऽस्माभिः।

## तदभावोऽनुल्लासः ॥ ६७

अन्यस्य गुणे दोषे वा सत्यप्यन्यस्य गुणो दोषो वा यन्न भवति सोऽयमनुल्लासो नामालंकारः। उदाहरणम्।

गुरुचरणसरोजसन्निधाना-
दपि वयमस्य गुणैकलेशभाजः।
अपि महति जलार्णवे निमग्नाः
सलिलमुपाददते मितं हि मीनाः॥

अत्र गुरुचरणजलार्णवयोर्गुणैनास्माकं मीनानां च गुणाभावः। यथावा,

मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादलसपुरुषानादरभरैः।
यथा यूनस्तद्वत् परमरमणीयाऽपि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते॥

अत्रोक्तिरमणीगुणाभ्यां अलसपुरुषकुमारयोरन्तःकरणानन्दरूपगुणाभावः। दोषे दोषाभावः खल्वपि।

त्वञ्चेत् सञ्चरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः कङ्कणभूषणानि कुरुषे हानिर्न हेम्नामपि।
मूर्द्धन्यं कुरुषे सितांशुमयशः किं नाम लोकत्रयी-
दीपस्याम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे॥

अत्र भगवतोऽनङ्गीकारदोषेण दिग्दन्तिप्रभृतीनां लघुतादिदोषस्याभावः। एवं,

त्वयि भक्तिमता न सत्कृतः
कुरुराजा गुरुरेव चेदिपः ।
प्रियमांसमृगाधिपोज्झितः
किमवध्यः करिकुम्भजो मणिः ॥

इत्यादिकमप्युदाहार्य्यम् । दानार्थिनो मधुकरा इत्यादावपि करिणो दूरीकरणदोषेण भ्रमराणां दोषाभावो वर्णित इत्ययमप्यलङ्कारस्तत्र प्रवेष्टुमर्हति । ऊहनीयमन्यत् ।

दोषगुणयोर्गुणदोषदर्शनादभ्यर्थनानादरावनुज्ञाऽवज्ञे ॥ ६८

गुणदर्शनात् दोषस्याभ्यर्थनमनुज्ञा । दोषदर्शनाद्गुणस्यानादरोऽवज्ञा । तदिदमलङ्कारद्वयम् । तत्राद्यस्योदाहरणम् ।

विपदः सन्तु ताः शश्वत्तत्र तत्र जगद्गुरो ।
भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम् ॥

यथा वा,—

व्रजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं
किमित्यमरसम्पदः प्रमथनाथ, नाथामहे ।
भवद्भवनदेहलीविकटतुण्डदण्डाहति-
त्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते ॥

द्वितीयस्य खल्वपि ।

सत्यादप्यनृतं श्रेयो धिक् स्वर्गं नरकोऽस्तु मे ।
भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम् ॥

यथा वा,—

वृणे दृगीशानिति का कथा तथा
त्वयीति नेच्छे नलभामपोह्नया ।
सतीव्रतेऽग्नौ हुणयामि जीवितं
स्मरस्तु किं वस्तु तदस्तु भस्म यः ॥

यथा वा,—

कण्ठकोणविनिविष्टमीश, ते
कालकूटमपि मे महामृतम् ।
अप्युपात्तममृतं भवद्वपु-
र्भेदवृत्ति यदि मे न रोचते ॥

अत्र पूर्व्वार्द्धमनुज्ञाया उदाहरणम् । एवं,

नास्य श्लाघामकलितगुणः पोषयन् प्रीतये नः
कोऽन्यैश्चित्रस्तुतिशतविधौ शिल्पिनः स्यात् प्रकर्षः ।
निन्दामेव प्रथयतु जनः किन्तु दोषान्निरूप्य
प्रेच्यांस्तस्य स्खलितवचनं प्रीणयेदेव भूयः ॥

इत्यादिकमप्युदाहार्य्यम् ।

## सहसेष्टसिद्धिः प्रहर्षणम् ॥ ६९

इष्टोऽर्थः सहसैव यत् सिध्यति, तत् प्रहर्षहेतुत्वात् प्रहर्षणम् । उदाहरणम् ।

कोकिलालापमधुरे विधुराय प्रियामृते ।
तामेव ध्यायते तस्मै विसृष्टा सैव दूतिका ॥

यथा वा,

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे, गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहः केलयः ॥

यथा वा,

निधिशास्त्रप्रवीणेन केनचिन्निधिलिप्सुना ।
निध्यञ्जनौषधीमूलं खनताऽऽसादितो निधिः ॥

यथा वा,

उच्चित्य प्रथममवस्थितं मृगाक्षी
पुष्पौघं श्रितविटपं ग्रहीतुकामा ।
आरोढुं पदमदधादशोकयष्टा-
वामूलं पुनरपि तेन पुष्पिताऽभूत् ॥

नेयं विभावना, कारणाभावस्यानिबन्धनात् तदपेक्षया वैचित्र्यान्तरस्य सत्त्वाच्च । अपिच चतुर्थोदाहरणे पादन्यासेनैवाशोकयष्टेरामूलपुष्पितत्वाभिधानात् कुतो विभावनायाः प्रसङ्गः । तस्मादलङ्कारान्तरमेवेदमादरणीयम् । एतस्य प्रतिद्वन्द्वितया विषादनमप्यलङ्कारान्तरमेष्टव्यमिति तु नाशङ्कनीयम् । विषमेणैव तस्य गतार्थत्वात् । इष्यमाणविरुद्धार्थप्राप्तिर्हि तल्लक्षणमिष्यते । सा च चतुर्थे विषमप्रकारे एव निवेष्टुमर्हति । न तु ततोऽन्यद्वैचित्र्यमुपलभ्यते, येनालङ्कारान्तरमप्युपगन्तव्यं भवति । यदि त्विष्यमाणाप्रतिलम्भमात्रे विषादनं तद्विरुद्ध-

प्रतिलम्भे विषम इत्यङ्गीक्रियते, तदा भवत्वलंकारान्तरं तत्। यथोक्तमेव तु युक्तमुत्पश्यामः।

अन्यनिमित्तस्य छद्मनाऽन्यनिमित्ततयोपपादनं व्याजोक्तिः॥ ७०

यदन्यनिमित्तमेवोद्भूतं वस्तु, तदेव च्छलेनान्यनिमित्तोद्भवतया यदुपपाद्यते, सेयं व्याजोक्तिः। उदाहरणम्।

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवतादः शिवः॥

अत्र सात्त्विकरूपतयोद्भूतं रोमाञ्चादि शैत्योद्भवतयोपपादितम्। यथा वा,

आयान्तमालोक्य हरिं प्रतोल्या-
माल्याः पुरस्तादनुरागमेका।
रोमाञ्चकम्पादिभिरुच्यमानं
रामा जुगूह प्रणमन्त्यथैनम्॥

अत्रानुरागनिमित्तानि रोमाञ्चकम्पादीनि भक्तिनिमित्ततयोपपादितानि। एवं,

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्रायिणि, वारितवामे, सहस्वेदानीम्॥

इत्यादिकमप्युदाहार्यम्। उपनायकदष्टाधरां निर्भर्त्सयति भर्त्तरि तां प्रति तत्सख्या उक्तिरियम्।

भङ्ग्यन्तरेणोक्तिः पर्य्यायोक्तम् ॥ ७१

भङ्ग्यन्तरेण यदुच्यते, तत्पर्य्यायोक्तं नाम। यदेव प्रतीयते तस्यैव प्रकारान्तरेणोक्तिर्भङ्ग्यन्तरेणोक्तिरिहाभिप्रेयते।

समत्सरेणासुर इत्युपेयुषा
चिराय नाम्नः प्रथमाभिधेयताम्।
भयस्य पूर्व्वावतरस्तरस्विना
मनःसु येन द्युसदां न्यधीयत ॥

हिरण्यकशिपोरेव प्रथमं द्युसदां भयमासीदित्ययं प्रतीयमानोऽप्यर्थो भङ्ग्यन्तरेणोच्यते। यथा वा,

अनायि देशः कतमस्त्वयाऽद्य
वसन्तमुक्तस्य दशां वनस्य।
त्वदाप्तसंकेततया कृतार्था
श्रव्याऽपि नानेन जनेन संज्ञा ॥

यथा वा,

व्याख्यं नैकतया स्थितं श्रुतिगणं जन्मो न वल्मीकतो-
नाभौ नाभवमच्युतस्य सुमहद्भाष्यं च नाभाषिषम्।
चित्रार्थां न वृहत्कथामचकथं सूत्रामृणि नासं गुरु-
र्देव, त्वद्गुणवृन्दवर्णनमहं कर्त्तुं कथं शक्नुयाम् ॥

अत्र नाहं वादरायणः नाहं वाल्मीकिः नाहं चतुर्मुखः नाहं शेषः नाहं गुणाढ्यः नाहं वाक्पतिरिति प्रतीयमाना एवार्थाः प्रकारान्तरेणोच्यन्ते। न चेयं कार्य्यात् कारणावगति-

रूपा अप्रस्तुतप्रशंसा। न ह्यत्र कार्य्यात् कारणमवगम्यते, किन्तर्हि तदसाधारणकार्य्यकर्त्तृत्वाभावमुखेन तद्व्यतिरेकः। वेदव्यसनकर्त्ता नाहमिति रीत्या तु यो वेदव्यसनकर्त्ता तस्य भेद एवात्मनि प्रतिपाद्यते इति नेयमप्रस्तुतप्रशंसा। यदि परिकरेण सङ्कीर्य्येतापि, न काचिद्वस्तुचतिरिति। केचित् पुनराहुः। यत्राप्रस्तुतात् कार्य्यात् प्रस्तुतं कारणमवगम्यते तत्राप्रस्तुतप्रशंसा, यत्र तु प्रस्तुतात् कार्य्यात् प्रस्तुतं कारणं प्रतीयते तत्र पर्य्यायोक्तम्। इह तु प्रस्तुतांकुरस्यैव विषयः इति।

## व्याजेनेष्टसाधनमप्येकेषाम्॥ ७२

छलेनेष्टं फलं यत् साध्यते, तदप्येकेषां मते पर्य्यायोक्तमुच्यते। उदाहरणम्।

उपगीतां मधुकरैः कोकिलैरभिनन्दिताम्।
यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह॥

यथा वा,

देहि मत्कन्दुकं राधे, परिधाननिगूहितम्।
इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु वः॥

यथा वा,

स्वस्ति श्रीभोजराज, त्रिभुवनविजयी धार्म्मिकः सत्यवादी
पिता या ते गृहीता नवनवतितमा रत्नकोटिर्मदीया।
तां त्वं देहि त्वदीयैः सकलबुधगणैर्ज्ञायते सत्यमेतत्
नो वा जानन्ति केचिन्नवकृतमथवा देहि लक्षं ततो मे॥

यथा वा,

आनीता नटवन्मया तव पुरः श्रीकृष्ण, या भूमिका
व्योमाकाशखखाम्बराब्धिवसवस्त्वत्प्रीतयेऽद्यावधि।
प्रीतो यद्यपि ताः समीच्य भगवन्, यद्वाञ्छितं देहि मे
नो चेद् ब्रूहि कदाऽपि माऽऽनय पुनर्मामीदृशीं भूमिकाम्॥

यथा वा,

प्रलापैरित्येवं जननि, सुतरां कैकयशिशो-
स्तवाल्पाऽपि प्रीतिर्यदि भवति, सोऽयं खलु कृती।
न चेत् पादेनैनं शिरसि चपलं ताड़य शिवे,
प्रलापव्यासक्तं पुनरपि यथैवं न भविता॥

इदं मम। एवं,

मया विमुक्ता वह्निरेव वल्लकी
व्रजेदवश्यायकणैश्च साऽऽर्द्रताम्।
द्रुतं तदेनां करवै निचोलके
कया चिदेवं मिषतो विनिर्ययै॥

दशत्यसौ परभृतः सहकारस्य मञ्जरीम्।
तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम्॥

यन्मिथ्यावचनेन कुपासितरां मह्यं तदतत्तथा
तिष्ठेत् त्वं किल मत्प्रियाऽस्यभिमतं कृत्वा सुखं स्थीयताम्।
यन्मुक्ताफलसोदराश्रुसलिलैराप्लाव्यते त्वन्मुखं
मामेतद्दहति स्थिरोऽञ्जलिरयं मा निर्दये, रुष्यताम्॥

इदं मम। इत्येवमादिको भूयानुदाहरणप्रपञ्चोऽस्य बुभुत्-सितव्यः। भोजराजश्चात्र पर्य्यायाख्यमलङ्कारमाह। एवञ्चाने-

नैव गतार्थत्वादनुकूलाख्यमलङ्कारान्तरं न लक्षयितव्यं भवति। नवीनास्तु "अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत्"—इति लक्षयन्ति।

कुपिताऽसि यदा तन्वि, निधाय करजक्षतम्।
बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा॥

इत्युदाहरन्ति च।

## इष्टलाभाय तद्विरुद्धानुष्ठानं विचित्रम्॥ ७३

किञ्चिदिष्टं फलं लब्धुं तद्विरुद्धं यदनुष्ठीयते, तद्विचित्रं नाम। उदाहरणम्।

वपुषा पुराणपुरुषः पुरः क्षितौ
परिपुञ्जमानपृथुहारयष्टिना।
भुवनैर्नतोऽपि विहितात्मगौरवः
प्रणनाम नाम तनयं पितृष्वसुः॥

यथा वा,

प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान्।
दुःखीयति सुखहेतोः कोमूढ़ः सेवकादन्यः॥

## तेनैव तदन्यथाकरणं व्याघातः॥ ७४

येन किलोपायेनैकेन कर्त्ता यदुपकल्पितं, तेनैवोपायेनापरेण कर्त्ता यत्तदन्यथा क्रियते, सोऽयं व्याघातः। उदाहरणम्।

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः॥

यथा वा,

इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते, मृदुरसि न चायाससहना।
मृदुत्वं मे हेतुः सुभग, भवता गन्तुमधिकं
न मृद्वी सोढ़ा यद्विरहकृतमायासमसमम्॥

अत्र प्रवत्स्यता नायकेन मृदुत्वं हेतूकृत्य नायिकाया गृहावस्थितेरौचित्यमुपकल्पितं, नायिकया पुनस्तेनैवोपायेन नायकेन सार्द्धमात्मनोगमनं समर्थितमित्येकमेव लक्षणमुदाहरणद्वयमभिधत्ते। लक्षणान्तरमिहानुसरन्त्यन्ये।

## आधाराधेययोराधिक्यमधिकम्॥ ७५

विच्छित्तिविशेषेणाधाराधेययोराधिक्यं यदुपनिबध्यते, तदधिकम्। एकत्र द्वयोराधिक्यासम्भवात् क्वचिदाधारस्य क्वचिदाधेयस्याधिक्यमवसेयम्। क्रमेणोदाहरणम्।

अहो विशालं भूपाल, भुवनत्रितयोदरम्।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते॥

अत्र महतो यशसोऽप्याधिक्यमाधारस्य भुवनत्रितयोदरस्य।

युगान्तकालप्रतिसंहृतात्मनो-
जगन्ति यस्यां सविकाशमासत।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः॥

अत्र भगवतस्तनोरप्याधिक्यं मुदः। न चैतत्प्रतिहन्तिनयाऽन्यमप्यलङ्कारान्तरं स्यादिति शङ्कनीयम्। आधाराधेययो-

स्वल्पत्वपर्य्यवसितं हि तत्र स्वल्पप्रमाणादतिरिच्यते । एकस्य स्वल्पत्वे निर्विवादमाधिक्यमपरस्य । प्रकारान्तरेण त्विष्यत एव तत् । अल्पत्ववर्णनस्य कविसंरम्भगोचरतायां तदित्यपरे ।

## महतोऽप्यल्पत्वमल्पम् ॥ ७६

स्वभावतो महतोऽपि वस्तुनः कस्माच्चिद्विच्छित्तिविशेषादल्पत्वं यदुपनिबध्यते, तदल्पं नाम । उदाहरणम् ।

किं ब्रूमो हरिमस्य विश्वमुदरे किं वा फणां भोगिनः
शेते यत्र हरिः स्वयं जलनिधेः सोऽप्येकदेशे स्थितः ।
आश्चर्य्यं कलसोद्भवस्य महिमा यस्यैकहस्तेऽम्बुधि-
र्गण्डूषीयति पङ्कजीयति फणी भृङ्गीयति श्रीपतिः ॥

अत्र महतामपि भगवदादीनामगस्त्यहस्तेऽल्पत्वं विच्छित्तिविशेषेणैवोपनिबद्धम् । न त्वगस्त्यहस्तस्य महत्त्वमिहोच्यते । सूक्ष्मादाधेयादाधारस्य सूक्ष्मत्वमल्पमपरे मन्यन्ते ।

## प्रतिपक्षपक्षतिरस्कारः प्रत्यनीकम् ॥ ७७

प्रतिपक्षमतिरस्कृत्य यत् तदीयमेव किञ्चित्तिरस्क्रियते, तत् प्रत्यनीकम् । उदाहरणम् ।

मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः ।
मन्ये मार्त्तण्डगृह्याणि पद्मान्युद्धर्त्तुमुद्यतः ॥

यथा वा,

मम रूपकीर्त्तिमहरद्भुवि य-
स्तदनुप्रविष्टहृदयेयमिति ।

त्वयि मत्सरादिव निरस्तदय:
सुतरां चिणोति खलु तां मदन: ॥

यथा वा,

यस्य किञ्चिदपकर्त्तुमचम:
कायनिग्रहगृहीतविग्रह: ।
कान्तवक्त्रसदृशाकृतिं कृती
राहुरिन्दुमधुनाऽपि बाधते ॥

प्रतिपचतिरस्कारोप्येऽकेषाम् ॥ ७८

साचात् प्रतिपचएव यत्तिरस्क्रियते, तदपेरकेषां मते भवति प्रत्यनीकम् । उदाहरणम् ।

मधुव्रतौघ: कुपित: स्वकीय-
मधुप्रपापद्मनिमीलनेन ।
बिम्बं समाक्रम्य बलात् सुधांशो:
कलङ्कमङ्के ध्रुवमातनोति ॥

क्रमेणैकमनेकस्मिंस्तद्विपर्य्ययो वा पर्य्याय: ॥ ७९

क्रमेणैकं वस्तु यदनेकस्मिन् भवति क्रियते वा, तथा क्रमेणानेकमेकस्मिन् भवति क्रियते वा, सोऽयं चतुर्व्विध: पर्य्याय: । क्रमेणोदाहरणम् ।

नन्वाश्रयस्थितिरियं तव कालकूट,
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।

प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥

यथा वा,

स्थिताः क्षणं पक्ष्मसु ताड़िताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदविन्दवः ॥

द्वितीयो यथा,

विमृष्टरागादधरान्निवर्त्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशांकुरादानपरिक्षतांगुलिः
कृतोऽक्षसूत्रप्रणयी तया करः ॥

यथा वा,

तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम् ।
विम्बाधरे प्रियाणां निवेशितं कुसुमवाणेन ॥

तृतीयो यथा,

मधुरिमरुचिरं वचः खलाना-
ममृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुमन्त-
र्गतमिव हालाहलं विषं तदेव ॥

यथा वा,

पुराऽभूदस्माकं नियतमविभिन्ना तनुरियं
ततोनु त्वं प्रेयान् वयमपि हताशाः प्रियतमाः ।

इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
मयाऽऽप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥

अत्र दम्पत्योः प्रथममभेदः ततः प्रेयसीप्रियतमभावस्ततः कलत्रपतिभावः ।

यथा वा,

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढ़यति ॥

चतुर्थः खल्वपि ।

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुषलध्वनिः कलमिदं सङ्गीतकं योषिता-
माश्चर्य्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥

यथा वा,

ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः ।
निधीयते तयोः स्थूलाः स्तनयोरश्रुविन्दवः ॥

क्वचिदाधेयस्य पूर्व्वाधारापरित्यागेनाधारान्तरसञ्चारो दृश्यते ।
यथा,—

विम्बोष्ठएव रागस्ते तन्वि, पूर्व्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि, लक्ष्यते ॥

अत्र रागशब्दः श्लिष्टः। तदत्र रागयोर्भेदेऽप्यभेदाध्यवसाय-मुपजीव्यायमलंकारः प्रवर्त्तते। इममेव विकासपर्य्यायमाहुः। सङ्कोचपर्य्यायः खल्वपि।

प्रायश्चरित्वा वसुधामशेषां
छायासु विश्रम्य ततस्तरूणाम्।
प्रौढिं गते सम्प्रति तिग्मभानौ
शैत्यं शनैरन्तरपामयासीत्॥

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्।
धत्ते वक्षः कुचसचिवतामद्वितीयश्च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन॥

इत्यादिकमप्युदाहार्य्यम्।

**प्रसिद्धमाधारमन्तरेणाधेयावस्थितिर्युगपदेकस्या-नेकस्मिन् वृत्तिरन्यत् कुर्व्वतोऽन्यस्य कृतिश्च विशेषः॥ ८०**

प्रसिद्धमाधारमन्तरेणाधेयस्यावस्थितिर्यदुपनिबध्यते, सोऽयं प्रथमो विशेषः। स खल्वयं द्विधा भिद्यते, आधेयस्याधारान्तरेऽवस्थितिर्निराधारा चेति। क्रमेणोदाहरणम्।

प्रतिपक्षतिरस्कारे काऽपि रीतिर्महात्मनाम्।
गतेऽपि सूर्य्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः॥

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥

यच्चैकस्यैवानेकस्मिन् युगपदवस्थितिः, स द्वितीयः । उदाहरणम् ।

सा वसति तव हृदये सा चैवाक्षिषु सा च वचनेषु ।
अस्मादृशानां सुन्दर, अवकाशो नास्ति पापानाम् ॥

यच्चान्यत् कुर्व्वतोऽन्यस्यापि करणं सम्पद्यते, स तृतीयः । यथा,

गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम् ॥

पृथगेवैते विशेषप्रकाराः सौकर्य्यादेकत्रोपदर्शिताः । एवमन्यत्रापारनुसन्धेयम् ।

## परस्परमुपकारोऽन्यन्यम् ॥ ८१

परस्परेण परस्परं यदुपक्रियते, तदन्योन्यं नाम । उदाहरणम् ।

त्वया सा शोभते तन्वी तया त्वमपि शोभसे ।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी ॥

यथा वा,

कण्ठस्य तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य ।

अन्योन्यशोभाजननाद्बभूव
साधारणो भूषणभूष्यभावः ॥

यथोर्द्धाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः ।
तथा प्रपापालिकाऽपि धारां वितनुते तनुम् ॥

अत्र परस्परमुखदर्शनलालसयोः पथिकप्रपापालिकयोर्विरलाङ्गुलितया तनुधाराप्रदानेन च चिरकालमुदकपानदानानुवृत्तेः परस्परमुपकारः प्रत्येतव्यः । एवमन्यदप्युदाहरणमनुसन्धेयम् ।

## विनिमयः परिवृत्तिः ॥ ८२

कयोश्चिद्वस्तुनोर्यो विनिमयः सा भवेत् परिवृत्तिर्नाम । स चायं विनिमयः समेन न्यूनेनोत्तमेन चेति त्रिविधः । उदाहरणम् ।

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् ।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥

अत्र पूर्व्वार्द्धे समेन समस्य विनिमयः । उत्तरार्द्धे उत्तमेन न्यूनस्य न्यूनेनोत्तमस्य वा ।

नानाविधप्रहरणैर्नृप, सम्प्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।

दृप्तारिवीरविसरेण वसुन्धरेयं
निर्व्विप्रलम्भपरिरम्भविधिर्व्वितीर्णा ॥

अत्र न्यूनेनोत्तमस्य।

तस्य च प्रवयसो जटायुषः
स्वर्गिणः किमिव शोच्यतेऽधुना।
येन जर्ज्जरकलेवरव्ययात्
क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥

अत्रोत्तमेन न्यूनस्य।

## विवक्षितनिषेधः आक्षेपः ॥ ७२

वक्तुमिष्टस्य यो निषेधः सोऽयमाक्षेपः। वक्तुं खल्विष्टस्य निषेधोऽनुपपद्यमान आभासीभवन् कमपि विशेषं गर्भीकरोति। सैवालङ्कारभूमिः। तत्र क्वचिद्वक्ष्यमाणस्य निषेधः क्वचिच्चोक्तस्य। तत्र प्रथमो यथा,—

ए एहि किमपि कस्या अपि कृते निष्कृप, भणाम्यलमथवा।
अविचारितकार्य्यारम्भकारिणी म्रियतां न भणिष्यामि ॥

अत्राशक्यवक्तव्यत्वं विशेषः। अत्र सामान्यतः सूचितस्य वक्ष्यमाणविशेषे निषेधः। यथा वा,

तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम्।
हन्त नितान्तमिदानीमाः किं हतजल्पितैरथवा ॥

अत्र मरिष्यतीत्यंशो नोक्तः। अत्राप्यशक्यवक्तव्यत्वं विशेषः। द्वितीयेऽपि प्रकारे क्वचिदुक्तस्यैव निषेधः। यथा,

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन, न ब्रूमहे॥

अत्रोक्तस्यैव निषेधः। अतिप्रसिद्धत्वं दुःखस्यातिशयो वा विशेषः। एवमन्यत्राप्यनुसन्धेयम्। क्वचिच्चोक्तस्य निषेधमर्थतः सूचयित्वा तत्समर्थनम्। यथा,

जनयति सन्तापमसौ चन्द्रकला कोमलाऽपि मे चित्रम्।
अथवा किमत्र चित्रं दहति हिमानी हि भूमिरुहः॥

अत्र पूर्व्वार्द्धे चन्द्रकलायाः सन्तापजनकत्वस्य निषेधश्चित्रमित्यनेनार्थात् सूचितः। अथवेत्यादिनोत्तरार्द्धेन तस्यैव समर्थनम्। यथा वा,

तव गणयामि गुणानहमलमथवाऽसत्प्रलापिनीं धिङ्माम्।
कः खलु कुम्भीरम्भो मातुमलं जलनिधेरखिलम्॥

साहित्यपाथोनिधिमन्थनोत्थं
कर्णामृतं रक्षत हे कवीन्द्राः।
यत्तस्य दैत्या इव लुण्ठनाय
काव्यार्थचोराः प्रगुणीभवन्ति॥
गृह्णन्तु सर्व्वे यदि वा यथेच्छं
नास्ति क्षतिः काऽपि कवीश्वराणाम्।
रत्नेषु लुप्तेषु बहुष्वमर्त्यै-
रद्यापि रत्नाकर एव सिन्धुः॥

इत्यादिकमप्युदाहार्य्यम् । क्वचिच्चोक्तनिषेधस्यार्थतः सूचनमात्रम् । यथा,

चन्द्र, सन्दर्शयात्मानमथवाऽस्ति प्रियामुखम् ।
बिम्बाधरे तदस्त्येव येन गर्व्वोऽमृतेन ते ॥

अत्राथवेत्यनेनोक्तनिषेधः सूचितः । केचिद्वस्तुस्वरूपनिषेधमप्याक्षेपमिच्छन्ति । तत्रोदाहरणम् ।

नरेन्द्रमौले, न वयं राजसन्देशहारिणः ।
जगत्कुटुम्बिनस्तेऽद्य न शत्रुः कश्चिदोच्यते ॥

अत्र सन्देशहारिणामुक्तौ न वयं सन्देशहारिण इति निषेधोऽनुपपद्यमानो यथार्थवादित्वरूपं विशेषमवगमयति । अपरे पुनः करिष्यमाणस्यापि निषेधमाक्षेपमाचक्षाणाः,—

तां सुन्दरीं वर्णयितुं न मे वाणी प्रवर्त्तते ।

इत्युदाहरन्ति ।

गच्छेति वक्तुमिच्छामि त्वत्प्रियं मत्प्रियैषिणी ।
निर्गच्छति मुखाद्वाणी मा गा इति करोमि किम् ॥

इत्येवमादयोऽन्येप्याक्षेपप्रकारा भोजदेवादिभिरुपदर्शिताः ।

## विधिश्चानिष्टस्य ॥ ७२

अनिष्टस्य वस्तुनो विधिश्चाक्षेपो भण्यते । अत्राप्यनिष्टस्य विधिरसम्भवन् आभासतामापद्यमानः कमपि विशेषमवगमयति । उदाहरणम् ।

गच्छ गच्छसि चेत् कान्त, पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥

अत्र गमनस्यावश्यपरिहार्य्यत्वरूपो विशेषः प्रतीयते। आचार्य्यास्तु निषेधोक्तिमात्रमाक्षेपं मन्यमानाः प्रभूततमं भेदमाचक्षते। तत्रोदाहरणानि।

अनङ्गः पञ्चभिः पुष्पैर्विश्वं व्यजयतेषुभिः।
इत्यसम्भाव्यमथवा विचित्रा वस्तुशक्तयः॥

अत्र प्रवृत्तैव जयायोगबुद्धिर्हेतुवशादाक्षिप्तेति वृत्ताक्षेपोऽयम्।

कुतः कुवलयं कर्णे करोषि कलभाषिणि।
किमपाङ्गमपर्य्याप्तमस्मिन् कर्म्मणि मन्यसे॥

अत्र कर्णे कुवलयं कुर्व्वत्येव काचित् चाटुकारेणैवमुच्यते इति वर्त्तमानाक्षेपोऽयम्।

सत्यं ब्रवीमि न त्वं मां द्रष्टुं वल्लभ, लप्स्यसे।
अन्यचुम्बनसंक्रान्तलाक्षारक्तेन चक्षुषा॥

कयाचिन्मनस्विन्या भाविनमपराधमाशङ्कमानया प्रियानेवमुच्यते इति भविष्यदाक्षेपोऽयम्। त इमे त्रैकाल्यापेक्षया भेदाः।

तव तन्वङ्गि, मिथ्यैव रूढमङ्गेषु मार्द्दवम्।
यदि सत्यं मृदून्येव किमकाण्डे रुजन्ति माम्॥

गात्रधर्म्मस्य मार्द्दवस्याक्षेपाद्धर्म्माक्षेपोऽयम्।

सुन्दरी सा नवेत्येष विवेकः केन जायते।
प्रभामात्रं हि तरलं दृश्यते न तदाश्रयः॥

धर्म्याक्षेपोऽयम्।

चक्षुषी तव रज्येते स्फुरत्यधरपल्लवः ।
भ्रुवौ च भुग्नौ न तथाप्यदुष्टस्यास्ति मे भयम् ॥

भयकारणस्यापराधस्याक्षेपात् कारणाक्षेपोऽयम् ।

दूरे प्रियतमः सोऽयमागतो जलदागमः ।
दृष्टाश्च फुल्ला निचुला न मृता चास्मि किं न्विदम् ॥

कारणमुपन्यस्य कार्य्यस्याक्षेपात् कार्य्याक्षेपोऽयम् ।

न चिरं मम तापाय तव यात्रा भविष्यति ।
यदि यास्यसि यातव्यमलमाशङ्कयाऽत्र ते ॥

अनुज्ञामुखेन यात्राऽऽक्षेपादनुज्ञाक्षेपोऽयम् ।

धनं च बहु लभ्यं ते सुखं क्षेमञ्च वर्त्मनि ।
न च मे प्राणसन्देहस्तथापि प्रिय मा स्म गाः ॥

अत्रानुबन्धिनो हेतूनुपन्यस्यापि प्रभुतयैव तदाक्षेपात् प्रभुत्वाक्षेपोऽयम् ।

जीविताशा बलवती धनाशा दुर्ब्बला मम ।
गच्छ वा तिष्ठ वा कान्त, स्वावस्था तु निवेदिता ॥

अनादरवद्वाक्योपन्यासेन गमनाक्षेपादनादराक्षेपोऽयम् ।

गच्छ गच्छसि चेत् कान्तेत्यादावाशीर्व्वचनाक्षेपः ।

यदि सत्यैव यात्रा ते काऽप्यन्या मृग्यतां त्वया ।
अहमद्यैव रुद्धाऽस्मि रन्ध्रापेक्षेण मृत्युना ॥

परुषाक्षरोपन्यासेन यात्राक्षेपात् परुषाक्षेपोऽयम् ।

गन्ता चेद्गच्छ तूर्णं ते कर्णौ यान्ति पुरा रवाः ।
आर्त्तबन्धुमुखोद्गीर्णाः प्रयाणपरिपन्थिनः ॥

साचिव्यकरणमुखेन प्रयाणाक्षेपात् साचिव्याक्षेपोऽयम् । गच्छेति वक्तुमिच्छामीत्यादौ कृतस्यापि यत्नस्य वैफल्योपदर्शनाद्यत्नाक्षेपः ।

प्रवृत्तैव प्रयामीति वाणी वल्लभ, ते मुखात् ।
अयतापि त्वयेदानीं मन्दप्रेम्णा करोमि किम् ॥

रोषप्रदर्शनाद्रोषाक्षेपोऽयम् ।

मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्च्छिता ।
बुद्धा वक्ति प्रियं दृष्ट्वा किं चिरेणागतो भवान् ॥

मूर्च्छया गमनाक्षेपादयं मूर्च्छाक्षेपः ।

नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम् ।
त्वद्द्विषां दीर्घिकास्वेव विशीर्णं नीलमुत्पलम् ॥

सानुक्रोशमुत्पलवैयर्थ्योपन्यासादयमनुक्रोशाक्षेपः ।

अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके ।
मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना ॥

श्लेषमुखेन मुख्येन्दोराक्षेपात् श्लिष्टाक्षेपोऽयम् ।

अर्थो न सम्भृतः कश्चिन्न विद्या काचिदर्ज्जिता ।
न तपः सञ्चितं किञ्चिद्गतञ्च सकलं वयः ॥

अनुशयोपन्यासादनुशयाक्षेपोऽयम् ।

किमयं शरदम्भोदः किं वा हंसकदम्बकम् ।
रुतं नूपुरसंवादि श्रूयते तन्न तोयदः ॥

संशयनिवर्त्तनात् संशयाक्षेपोऽयम् ।

चित्रमाक्रान्तविश्वोऽपि विक्रमस्ते न शाम्यति ।
कदा वा दृश्यते तृप्तिरुदीर्णस्य हविर्भुजः ॥

अर्थान्तरप्रदर्शनेन प्रक्रान्तविस्मयात्तेपादर्थान्तरात्तेपोऽयम् ।

न स्तूयसे नरेन्द्र, त्वं ददासीति कदाचन ।
स्वमेव मत्वा गृह्णन्ति यतस्त्वद्धनमर्थिनः ॥

सोऽयं हेत्वाक्षेपः ।

## तुल्यवद्विरुद्धपक्षद्वयोपन्यासोविकल्पः ॥ ८५

विरुद्धौ पक्षौ तुल्यवदुपन्यस्येते यत्, स विकल्पो नाम । उदाहरणम् ।

आज्ञा वा शिञ्जिनी वाऽपि क्रियतां श्रवणान्तरे ।
शिरो वा कार्मुकं वाऽपि नम्यतामचिरेण भोः ॥

यथा वा,—

दुष्प्रापमपि यत्नैर्वा साधयेयं ममेप्सितम् ।
पातयेयं शरीरं वा निश्चितेयं मतिर्मम ॥

ममेतौ ।

## अनेककारणयोगः समुच्चयः ॥ ८६

प्रत्येकसमर्थानां कारणानां कार्य्यकरत्वं समुच्चयः । यानि कारणानि प्रत्येकमेव कार्य्यं निर्वर्त्तयितुं पर्य्याप्तानि, तान्येव सम्भूय यत् कार्य्यं कुर्व्वन्ति, सोऽयं समुच्चयः । उदाहरणम् ।

दुर्व्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्म्मलम् ।
स्त्रीत्वं धैर्य्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमी
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः ॥

अत्र स्मरमार्गणादयः प्रत्येकमेव विरहासहत्वं कर्त्तुं समर्थाः। यथा वा,—

कुलममलिनं भद्रा मूर्त्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो-
व्रजति सुतरां दर्पं राजन्, तएव तवांकुशाः॥

सोऽयं सतां योगः। पूर्व्वोदाहरणे त्वसतां योगः। सदसतां योगस्तु दोषएव न त्वलङ्कारत्वमर्हति। यथा वा,—

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः
निरुत्सेको लक्ष्म्यामनभिभवगन्धाः परकथाः।
प्रियं कृत्वा मौनं सदसि कथनञ्चाप्युपकृतेः
श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं कथयति॥

चन्द्रे कलङ्कः सुजने दरिद्रता
विकाशलक्ष्मीः कमलेषु चञ्चला।
मुखाप्रसादः स्वजनेषु सर्व्वदा
यशो विधातुः कथयन्ति खण्डितम्॥

इत्यादिकमप्युदाहार्य्यम्।

हंहो धीरसमीर, हन्त जननं ते चन्दनक्ष्माभृतो-
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः।
प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः॥

इत्येवमादिकन्तु विषमस्योदाहरणं भवितुमुचितं न त्वेतस्य। चतुर्थपादस्त्वस्योदाहरणत्वमर्हति। चन्दनक्ष्माभृज्जन्मरूपे एक-

स्मिन्नदाहकारणे सत्यपि दाक्षिण्यादेरुपादानादस्याप्युदाहरण-मेतदिति समर्थयन्त्यन्ये।

शशी दिवसधूसरो गलितयौवना कामिनी
सरोविगतवारिजं मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो-
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे॥

सेयं तुल्ययोगिता दीपकं वा, सर्व्वेषामेकशल्यत्वधर्म्माभि-सम्बन्धात्। न ह्यत्रामीषां किञ्चित्कार्य्यमुपनिबद्धम्। तस्मा-देव विच्छित्तिविशेषात् खल्वयमलङ्कारस्ताभ्यां पृथगुपनिबध्यते। अस्ति ह्यत्रैकधर्म्माभिसम्बन्धो बहूनामिति॥

## यौगपद्यञ्च गुणक्रियाणाम्॥ ८७

गुणयोः क्रिययोर्गुणक्रियतोर्व्वा यद् यौगपद्यं, सोऽपि समु-च्चयः। क्रमेणोदाहरणम्।

शोणिमा नयनयोर्मृगीदृशः
कालिमा दयितवक्त्रमण्डले।
लोहिते ह्युदयति क्षपाकरे
लक्ष्यते मलिनिमाऽम्बुजन्मनि॥

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे, प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः॥

कलुषञ्च तवाहितेष्वकस्मात्
सितपङ्केरुहसोदरश्रि चक्षुः।

पतितश्च महीपतीन्द्र, तेषां
वपुषि प्रस्फुटमापदां कटाक्षैः॥

अत्र सर्व्वत्रातिशयोक्तिः प्राणत्वेनोपतिष्ठते। धुनोति चासिं तनुते च कीर्त्तिमित्यादावैकाधिकरण्येऽप्येष दृश्यते। एवं,

कृपाणपाणिश्च भवान् रणक्षितौ
ससाधुवादाश्च सुराः सुरालये॥

इति देशभेदेऽप्यस्य प्रवृत्तिः। एतद्विषयपरिहारेण दीपकस्य प्रवृत्तिः प्रतेतव्या। क्रिययोरैकाधिकरण्ये दीपकमेवेच्छन्त्यन्ये।

## ऐकाधिकरण्यञ्च भिन्नाधिकरणानाम्॥ ८८

भिन्नाधिकरणानां यदैकाधिकरण्यं, सोऽपि समुच्चयः। उदाहरणम्।

निसर्गभिन्नास्पदमेकसंस्थ-
मस्मिन् द्वयं श्रीश्च सरस्वती च।
कान्त्या गिरा सूनृतया च योग्या
त्वमेव कल्याणि, तयोस्तृतीया॥

सोऽयं समुच्चयप्रकारः प्राच्यैरनुक्तोऽपि विच्छित्तिविशेषसद्भावादादरणीयः।

## कारणान्तरोपनिपातात् कार्य्यसौकर्य्यं समाधिः॥ ८९

कस्मैचित् कार्य्यायैकस्मिन् कारणे उपादीयमाने दैवादुपनिपतितेन कारणान्तरेण यत् सौकर्य्येण कार्य्यमभिनिष्पाद्यते,

सोऽयं समाधिः । तेन हि सम्यगनायासेनाधीयते कार्य्यमिति ।

उदाहरणम् ।

मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्ज्जितम् ॥

सोऽयं समुच्चयस्यैव प्रकारो विच्छित्तिविशेषात् पृथगुपनिबद्धः । एवमन्यत्राप्यनुसन्धेयम् ।

## यथोत्तरं यथापूर्व्वं वा हेतुभावः कारणमाला ॥ ९०

उत्तरमुत्तरं प्रति पूर्व्वपूर्व्वस्य, तथा पूर्व्वं पूर्व्वं प्रत्युत्तरोत्तरस्य यद्धेतुभावः, सा भवेत् कारणमाला । क्रमेणोदाहरणम् ।

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥

अत्रेन्द्रियजयविनयगुणप्रकर्षजनानुरागसम्पदां यथोत्तरं हेतुभावः ।

सम्पज्जनानुरागेण स गुणोत्कर्षसम्भवः ।
गुणोत्कर्षश्च विनयाद्विनयोऽक्षजयाद्भवेत् ॥

अत्र सम्पज्जनानुरागगुणोत्कर्षविनयाक्षजयानां यथापूर्व्वं हेतुभावः ।

## उद्दिष्टानां क्रमेणार्थान्तरसम्बन्धो यथासंख्यम् ॥ ९१

येन क्रमेणोद्दिष्टानि वस्तूनि तेनैव क्रमेण यदर्थान्तरैः सम्बध्यन्ते, तदिदं यथासंख्यम् । उदाहरणम् ।

कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनाः शं वः।
जलनिधिगिरिपद्मस्था हरिहरचतुराननाः ददतु॥

यथा वा,

दुग्धोदधिशैलस्थौ सुपर्णवृषवाहनौ घनेन्दुरुचौ।
मधुमकरध्वजमथनौ पातां वः शार्ङ्गशूलधरौ॥

यथा वा,

शरणं किं प्रपन्नानि विषवन्मारयन्ति वा।
न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत्॥

## समृद्धिवर्णनमुदात्तम्॥ ९२

समृद्धिः सम्पत्। उदाहरणम्।

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।
दूराद्दाड़िमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्॥

## उपन्यासश्च महताम्॥ ९३

प्रस्तुतस्योत्कर्षप्रतिपत्तये यन्महतामुपन्यासः क्रियते, तदप्युदात्तम्। उदाहरणम्।

नाभिप्रभिन्नाम्बुरुहासनेन
संस्तूयमानः प्रथमेन धात्रा।
अमुं युगान्तोचितयोगनिद्रः
संहृत्य लोकान् पुरुषोऽधिशेते॥

रुद्रटस्त्विममलङ्कारमवसराख्यमाह । एवं हि तेनोक्तम् ।

अर्थान्तरमुत्कृष्टं सरसं यदि वोपलक्षणं क्रियते ।
अर्थस्य तदभिधानप्रसङ्गतो यत्र सोऽवसरः ॥

उदाहृतञ्च,

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥
सा शिप्रा नाम नदी यस्यामङ्गूम्भयोविशीर्य्यन्ते ।
मज्जन्मालवललनाकुचकुम्भास्फालनव्यसनात् ॥

## देशकालाभ्यामर्थपरिपाटी क्रमः ॥ ९४

देशतः कालतश्चार्थानां या परिपाटी क्रमेणोपन्यासः, सोऽयं क्रमः । क्रमेणोदाहरणम् ।

पायाद्वो रचितत्रिविक्रममनुर्देवः स दैत्यान्तको-
यस्याकस्मिकवर्द्धमानवपुषस्तिग्मद्युतेर्मण्डलम् ।
मौलौ रत्नरुचि श्रुतौ परिलसत्ताटङ्ककान्ति क्रमा-
ज्जातं वक्षसि कौस्तुभाभमुदरे नाभीसरोजोपमम् ॥

त्रिविक्रमतनोर्देवस्य प्रवृद्धिसमये मौलिश्रुतिवक्षउदर-लक्षणेषु शरीरदेशेषु तिग्मद्युतेर्मण्डलस्य योऽयं क्रमेण चूड़ा-रत्नताड़ङ्ककौस्तुभनाभिसरोजौपम्यलाभः, सेयं देशतोऽर्थपरि-पाटी क्रमः ।

हस्ते लीलाकमलमलकं बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।

चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम्॥

कमलकुन्दलोध्रकुरवकशिरीषनीपानां योऽयं शरद्धेमन्तशिशिरवसन्तग्रीष्मवर्षारूपकालक्रमेणोपन्यासः सेयं कालतोऽर्थपरिपाटी क्रमः। यथा वा,—

लीलाङ्गानां नयनयुगलद्राघिमादत्तपत्रः
कुम्भाविभौ कुचपरिचयः पूर्व्वपक्षीचकार।
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमानन्ववादीत्
वक्त्रज्योत्स्ना शशधररुचो दूषयामास यस्याः॥

पत्रदानपूर्व्वपक्षानुवाददूषणानि विद्वज्जनप्रसिद्धक्रमेणोपन्यस्तानि क्रमं प्रयोजयन्ति। शाब्दः क्रमएव यथासंख्यमार्थस्तु क्रमोदेशकालपरिपाटीभेदाद्भिद्यते इति प्राञ्चः। पराचीनैस्तु यथासंख्यमात्रमङ्गीकृतं न त्वयं क्रमो लक्षितः। इमं केचिद्रत्नावलीत्याचक्षते।

## वस्तुस्वभाववर्णनं स्वभावोक्तिः॥ ९५

वस्तुनः स्वभावः क्रियादिः। उदाहरणम्।

पश्चादंघ्री प्रसार्य्य त्रिकमतिविततं द्राघयित्वाऽङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो-
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण॥

एवमन्यदप्युदाहार्य्यम्।

## क्रियया रहस्यगोपनं युक्तिः॥ ९६

प्रकाशीभवतो रहस्यस्य लोकोत्तरया क्रियया यद्गोपनं सा युक्तिः। उदाहरणम्।

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच
स्तत् प्रातर्गुरुसन्निधौ निगदतस्तस्यातिमात्रं वधूः।
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीड़ार्त्ता विदधाति दाड़िमफलव्याजेन वाग्बन्धनम्॥

स चायं व्याजोक्तेर्विषयमपहाय प्रवर्त्तते। उत्सर्गस्यापवादविषयपरिहारेणैव प्रवृत्तेः। यदि सङ्कीर्य्यतापि क्वचिन्नैव काचित् क्षतिरिति।

## रहस्यप्रकाशनं सूक्ष्मम्॥ ९७

लोकोत्तरेण व्यापारेण यद्रहस्यमन्यस्मै प्रकाश्यते, तद्भवेत् सूक्ष्मं नाम। उदाहरणम्।

संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥

सन्ध्यासमयभाविना पद्मनिमीलनेन सएव संकेतकाल इति कयाचित् कस्मैचित् प्रकाश्यते। एवमन्यदप्युदाहार्य्यम्।

## अन्याभिप्रायेणोक्तिरन्योक्तिः॥ ९८

अन्यदभिप्रेत्यान्यदिव यदुच्यते। सेयमन्योक्तिः। उदाहरणम्।

नाथो मे विपणिं गतो न गणयत्येषा सपत्नी च मां
त्यक्त्वा मामिह पुष्पिणीति गुरवः प्राप्ता गृहाभ्यन्तरम् ।
शय्यामात्रसहायिनीं परिजनोभ्रान्तो न मां सेवते
स्वाभिन्नागमलालनीयरजनीं लक्ष्मीपते, रक्ष माम् ॥

अत्र लक्ष्मीपतिनामानं जारमभिप्रेत्य लक्ष्मीपतिं भगवन्तमिव प्रत्युच्यते । यथा वा,—

वत्से, मा गा विषादं श्वसनमुरुजवं सन्त्यजोर्द्ध प्रवृत्तं
कम्पः कोवा गुरुस्ते किमिह बलभिदा जृम्भितेनात्र याहि ।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमुग्धः पयोधिः ॥

भगवत् सकाशगमनाभिप्रायेण भयशमनार्थमिवैतदुच्यते ।

## लोकवादोपन्यासो लोकोक्तिः ॥ ९९

लोकप्रसिद्धोवादो यदुपन्यस्यते, सा लोकोक्तिः । उदाहरणम् ।

शापान्तो मे भुजगनामनादुत्थिते चक्रपाणौ
मासानन्यान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥

लोचने मीलयित्वेति लोकवादोपन्यासः । यथा वा—

मलयमरुतां व्राता याता विकासितमल्लिका-
परिमलभरोभग्नो ग्रीष्मस्त्वमुत्सहसे यदि ।

घन, घटयितुं तं निःस्नेहं यएव निवर्त्तने
प्रभवति गवां क्रिन्नश्छिन्नं स एव धनञ्जयः॥

यएव निवर्त्तने इत्यादिराम्नानां लोकवादः।

## अन्यार्थनाम्नोऽन्यार्थकल्पनं निरुक्तिः॥ १००

यानि नामानग्न्यर्थानि प्रसिद्धानि तेषामनेग्ऽर्था यत् कल्पग्न्ते, सा निरुक्तिः। उदाहरणम्।

पद्मिनीग्लंपयस्युच्चैर्दहस्यस्तैर्वियोगिनीः।
ईदृग्भैश्वरितैर्जाने सत्यं दोषाकरो भवान्॥

यथा वा,—

असुरस्त्वया न्यवधि कोऽपि
मधुरिति कथं प्रतीयते।
दण्डदलितभरघः प्रथसे
मधुसूदनस्त्वमिति सूदयन् मधु॥

## साभिप्रायौ विधिनिषेधौ तदाख्यौ॥ १०१

प्रसिद्धस्य विधिरनुप्रपद्यमानः कश्चिदभिप्रायं गर्भीकरोति। तथा प्रसिद्धस्य निषेधोऽनुपपद्यमानः कश्चिदभिप्रायं गर्भीकरोति। सोऽयमित्थम्भूतोविधिर्निषेधश्च तदाख्य एवाऽलङ्कारः। तत्र विधिर्यथा,—

रे हस्त दक्षिण, मृतस्य शिशोर्द्विजस्य
जीवातवे प्रहर शूद्रमुनौ कृपाणम्।

रामस्य गात्रमसि दुर्व्वहगर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते ॥

अत्र रामस्य गात्रमसीति विधिरनुपपद्यमानोऽत्यन्तनिष्करुणत्वं गर्भीकरोति। तच्चोत्तरदलेन प्रकटीकृतम्। यथा वा,

अयन्ते मातुलः प्राज्ञः क्षत्रधर्म्मस्य कोविदः।
दुर्य्यूतदेवी गान्धारः शकुनिर्युध्यतामिह ॥

योद्धुमागतस्य शकुनेर्युध्यतामिति युद्धविधिरनुपपद्यमान उपहासं गर्भीकरोति। तदेतद्विशेषणैराविष्कृतम्। निषेधः खल्वपि।

नाक्षान् क्षिपति गाण्डीवं न कृतं द्वापरं न च।
ज्वलतो निशितान् बाणांस्तीक्ष्णान् क्षिपति शत्रुषु ॥

अत्र गाण्डीवस्याक्षादिक्षेपणकर्त्तृत्वाभावः प्रसिद्धएव। तत्रानुपपद्यमानो निषेधः कमप्युपहासविशेषं गर्भीकरोति।

## हेतुमता सह हेतोरूपवर्णनं हेतुः॥ १०२

कार्य्येण सह कारणस्योपवर्णने हि कोऽपि विच्छित्तिविशेषः सहृदयसंवेद्यः। उदाहरणम्।

मानं नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्य्ये गते।
तृष्णे, त्वामनुबध्नता फलमियत् प्राप्तं जनेनामुना
यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥

यथा वा,—

आनन्दयन्नुत्पलिनीं ग्लापयंश्च सरोजिनीम् ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥

सोऽयं बहुभिरुपेक्षितोऽपि कैश्चिदाद्दत इत्युपदर्शितः ।

## अन्यदीयगुणग्रहणं तद्गुणः ॥ १०३

यत्किञ्चिदन्यस्य सन्निहितस्य प्रगुणस्य गुणं रूपादिकं गृह्णाति, सोऽयं तद्गुणः । उदाहरणम् ।

कुन्दकमालाऽपि कृता कार्त्तस्वरे भास्वरे त्वया कण्ठे ।
एतत्प्रभानुलिप्ता चम्पकदामभ्रमं कुरुते ॥

अत्रात्मीयं गुणमुत्सृजता परकीयो गुणो गृहीतः । यथा वा,—

विभिन्नवर्णा गरुड़ाग्रजेन
सूर्य्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वा-
मानिन्यिरे वंशकरीरनीलैः ॥

द्वावत्र तद्गुणौ । रत्नरुचैव हि रथ्यानां स्वैव रुचिरुल्लसिता न तु स्वैव । स एवह्यर्थोऽत्र कविप्रतिभासंरम्भगोचरः । केचिदत्र पूर्व्वरूपाख्यमलङ्कारान्तरमिच्छन्ति । यथा वा,—

प्रफुल्लतापिञ्छनिभैरभीषुभिः
शुभैश्च सप्तच्छदपांशुपाण्डुभिः ।
परस्परेण च्छुरितामलच्छवी
तदैकवर्णाविव तौ बभूवतुः ॥

अत्र द्वयोरेकवर्णत्वोत्प्रेक्षणात् स्वगुणमत्यजतोरेव परकीय-गुणग्रहणमभिनिष्पन्नम् । विभिन्नयोर्हि वर्णयोर्मेलनात् द्वयो-रेकवर्णत्वं घटते, न तु परस्परगुणत्यागेन परस्परगुणग्रहणे । तस्मादात्मीयगुणत्यागो न वाच्यः ।

## तदभावोऽतद्गुणः ॥ १०४

सत्यपि हेतौ योऽयमन्यदीयगुणग्रहणस्याभावः, सोऽतद्-गुणः । उदाहरणम् ।

गङ्गाभोगे विहरति मदैः पिच्छिले दिग्गजानां
वैरिस्त्रीणां नयनकमलेष्वञ्जनानि प्रमार्ष्टि ।
यद्यप्येषा हिमकरकराद्वैतसौवस्तिकी ते
कीर्त्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंह क्षितीन्द्र ॥

यथा वा,—

गाङ्गमम्बु सितमम्बु यामुनं
कज्जलाभमुभयत्र मज्जतः ।
राजहंस, तव सैव शुभ्रता
चीयते न च न चापचीयते, ॥

सोऽयं विच्छित्तिविशेषाद्विभावनां विशेषोक्तिं तयोः सङ्करञ्च बाधते इत्येतद्विषयपरिहारेण तत्प्रवृत्तिरवसेया । अनयैव रीत्या अन्यत्रापि समाधानमनुसरणीयम् ।

## निमित्तापगमेऽपि पूर्व्वावस्थाऽनुवृत्तिः पूर्व्वरूपम्॥ १०५

पूर्व्वावस्थानिमित्तस्यापगमेऽपि सैवावस्था यदनुवर्त्तते, तत् पूर्व्वरूपं नाम। उदाहरणम्।

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन्, सैव चिरन्तनप्रणयिनो शून्येऽपि राज्ये स्थितिः॥

## अन्यसन्निधानेन स्वगुणोत्कर्षोऽनुगुणः॥ १०६

अन्यस्य सन्निधानवशेनात्मीय एव गुणो यदुत्कर्षं पुष्णाति, स भवेदनुगुणो नाम। उदाहरणम्।

कपिरपि च कापिशायनमदमत्तो वृश्चिकेन सन्दष्टः।
अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतन्तस्य॥

यथा वा,—

कर्णे कृतानि वामाक्ष्या प्रस्निग्धैश्च गुणोत्तरैः।
नीलोत्पलानि दधते कटाक्षैरतिनीलताम्॥
प्रकृत्यैवोत्तरङ्गस्य झञ्झावातोऽयमम्बुधेः।
नियोजितात्मा यद्भूयः स वशी परमात्मनि॥

इत्यादिदर्शनात् गुणशब्दोऽत्र धर्म्ममात्रपरो बोद्धव्यः।

## तुल्यगुणयोर्भेदाग्रहः सामान्यम्॥ १०७

समानगुणयोः प्रतीयमानयोरेव वस्तुनोरन्यूनानतिरिक्तगुणवशाद्भेदो यन्न गृह्यते तदिदं सामान्यम्। उदाहरणम्।

मल्लिकामालभारिण्यः सर्व्वाङ्गीनार्द्रचन्दनाः।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥

अत्र ज्योत्स्नाऽभिसारिकयोर्धवलतैव तादृशी तथाविधभेदाग्रहे हेतुः। यथा वा,—

गन्तुं यदि व्यवसिताऽसि घनान्धकारे
नीलाञ्चलेन तनुमावृणु मुग्धकान्ते।
विद्युल्लता यदि पथि प्रतिरोधिनी स्या-
दप्राप्तैव कनकद्रुतगौरि, गच्छेः॥

## भेदग्रहस्त्वसामान्यम्॥ १०८

तयोरेव वस्तुनोर्यत् कुतश्चिद्विच्छित्तिविशेषाद्भेदो गृह्यते, तत् सामान्यप्रतिद्वन्द्विभूतमसामान्यं नाम। उदाहरणम्।

वाराणसीवासवतां जनानां
साधारणे शङ्करलाञ्छनेऽपि।
पार्थप्रहारव्रणमुत्तमाङ्गं
प्राचीनमीशं प्रकटीकरोति॥

यथा वा,—

रत्नस्तम्भेषु संक्रान्तप्रतिबिम्बशतैर्वृतः।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः॥

पूर्व्वोदाहरणे भेदप्रतिपत्तिहेतुरुपात्तः, इह तु नेति

विशेषः । तद्गुणरीत्यापि प्राप्ते भेदानध्यवसायेऽयमलङ्कारो-दृश्यते । यथा,

नृत्यद्भर्गाट्टहासप्रचुरसहचरैस्तावकीयैर्यशोभि-
र्धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंह क्षितीन्द्र ।
नेदृग्यद्येष नाभीकमलपरिमलप्रौढ़िमासादयिष्य-
द्देवानां नाभविष्यत् कथमपि कमलाकामुकस्यावबोधः ॥

## समलक्ष्मणा वस्तुगुप्तिर्मीलितम् ॥ १०९

समलक्षणा केनचित् प्रगुणेन वस्तुना कस्यचिद्वस्तुनएव येयं गुप्तिस्तन्मीलितं नाम । सामान्ये तुल्यगुणयोरुभयोर्भेदाप्रति-पत्तिरिह तु समगुणयोः प्रगुणेनाप्रगुणस्य वस्तुन एव तिरोधान-मित्यनयोर्भेदः ।

एकएव त्वलङ्कारो विच्छित्तिविशेषात् पृथगुपनिबद्धः । पृथगनुपलब्धिर्ह्यलङ्कारभूमिः । सा च भेदाग्रहेण गुप्त्या वेति युक्तमुत्पश्यामः । सादृश्याद्भेदाग्रहोमीलितं विशेषाग्रहः सामान्य-मिति त्वन्ये । उदाहरणम् ।

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो-
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥

अत्र दृक्तरलत्वादिकमङ्गस्य स्वाभाविकं लक्ष्म समञ्च मदो-दयेन । तेन किल लक्ष्मणा धर्म्येव मदोदयस्तिरोधीयते । यथा वा,—

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो वत भियां न बुधोऽप्यभिज्ञः ॥

अत्र कम्पादिकमागन्तुकम् ।

## गुप्तस्यापि परिस्फुर्त्तिरुन्मीलितम् ॥ ११० ॥

मीलितन्यायेन गुप्तस्यापि वस्तुनः कुतश्चिद्विच्छित्तिविशेषात् परिस्फुर्त्तिरुन्मीलितं नाम । उदाहरणम् ।

वेतत्वचा तुल्यरुचां वधूनां
कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन्
को वेदयिष्यन्नवचम्पकानि ॥

अत्र समलक्ष्मणा गण्डतलेन गुप्तानां नवचम्पकानां भृङ्गपतनात् परिस्फुर्त्तिः । यथा वा,—

रक्ते पादतले लाक्षारसो नालक्षि योजितः ।
ज्ञातः शोणपदाङ्केन प्रद्रवन्त्या मृगीदृशः ॥

यथा वा,—

सदैव शोणोपलकुण्डलस्य ,
प्रभाभिरालोहितवक्त्रपद्मे ।
कोपोदयोऽज्ञायि न मानिनीनां
भङ्ग्या भ्रुवोरेचितयोस्त्वलक्षि ॥

## मुखे पुनरुक्तिः पुनरुक्तवदाभासः ॥ १११

आपाततो या पुनरुक्तिः परमार्थतस्त्वर्थान्तरपरतया नास्त्येव सा, सोऽयं पुनरुक्तवदाभासः । यमकस्थलेऽपि समानाकारशब्दावृत्तेरापाततः पुनरुक्तिः प्रतिभासते । तद्विषयपरिहारेणास्य प्रवृत्तेरौचित्याद्भिन्नाकारशब्दगतत्वं विशेषणमनुक्तमप्यर्थवशादवसीयते । उदाहरणम् ।

भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः ।
जगन्त्यपि सदा पायादव्याच्चेतोहरः शिवः ॥

अत्रापाततो भुजङ्गकुण्डल्यादिशब्दानामेकार्थताप्रतीतेः पुनरुक्त्यवभासः, परमार्थतस्त्वर्थान्तरपरतया नास्ति पौनरुक्त्यम् । यथा वा,—

अरिवधदेहशरीरः सहसारथिसूततुरगपादातः ।
भाति सदानत्यागः स्थिरतायासवनितलतिलकः ॥

यथा वा,—

तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाममहः पृथुमनसामिन्द्रोहरिर्जिष्णुः ॥

प्रथमोदाहरणे भुजङ्गकुण्डलीति शब्दयोः प्रथमस्य परिवृत्तिसहत्वं शशिशुभ्रांशु इति द्वयोरपि । पायादव्यात् हरः शिव इत्युत्तरस्यैव । द्वितीयोदाहरणे देहशरीर इत्यत्र सारथिसूतेत्यत्र च द्वितीययोः परिवृत्तिसहत्वं, दानत्याग इत्यत्र न कस्यापि । तृतीयोदाहरणे तनुवपुरित्येतयोरिन्द्रोहरिरितयोश्च द्वितीयस्य परिवृत्तिसहत्वम् । अन्यत्र तु प्रथमस्येति । सोऽयं शब्दपरिवृत्तिसहत्वासहत्वाभ्यां शब्दार्थालङ्कारः । एवमुपमारूपकादि-

ष्वपि यथासम्भवमुभालङ्कारत्वमनुसन्धेयम् । तथाह्युक्तं भोजराजेन ।

शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते ।
विशिष्टोऽर्थः कवीनां स उभयालंक्रिया मता ॥
उपमा रूपकं साम्यं संशयोक्तिरपह्नुतिः ।
समाध्युक्तिः समासोक्तिरुत्प्रेक्षा प्रस्तुतस्तुतिः ॥
सतुल्ययोगितोल्लेखः ससहोक्तिः समुच्चयः ।
साक्षेपोऽर्थान्तरन्यासः सविशेषा परिष्कृतिः ॥
दीपकक्रमपर्य्यायातिशयश्लेषभाविकाः ।
संसृष्टिरिति निर्द्दिष्टास्ताश्चतुर्विंशतिर्बुधैः ॥

तदभिमताः केवलार्थालङ्कारा अपि तेनैवोपदर्शिताः । यथा,

अलमर्थमलं कर्त्तुं यद्व्युत्पत्त्यादिवर्त्मना ।
ज्ञेया जात्यादयः प्राज्ञैस्तेऽर्थालङ्कारसंज्ञया ॥
जातिर्व्विभावना हेतुरहेतुः सूक्ष्ममुत्तरम् ।
विरोधः सम्भवोऽन्योन्यं परिवृत्तिर्निदर्शना ॥
भेदः समाहितं भ्रान्तिर्व्वितर्कौमीलितं स्मृतिः ।
भावः प्रत्यक्षपूर्व्वाणि प्रमाणानि च जैमिनेः ॥

**रसभावाभासभावप्रशमानामितरगुणीभावो रसवत्-प्रेयउर्ज्जस्विसमाहितानि ॥ ११२**

रसाः शृङ्गारादयः । विभावादिभिरपरिपुष्टा देवादिविषया-रत्यादयो निर्व्वेदादयश्च भावाः । अनौचित्येन प्रवृत्ताः रसा-

भावाश्च रसवद्भाववच्चावभासमाना अपि न खल्वपि परमार्थतो-रसाभावाश्च भवन्ति इति त इहाभासाः। भावस्य कस्यचिदुपशमोभावप्रशमः। ते खल्वमी यदा इतरत्र रसादौ वाक्यार्थे वा गुणीभावमायान्ति, तदा यथाक्रमं रसवदादिनामानोऽलंकाराः। रसस्य गुणीभावो रसवदभिधेयोऽलंकारः। भावस्य प्रेयोऽभिधानः। आभासस्योर्ज्जस्विनामा। भावप्रशमस्य समाहिताख्यः। क्रमेणोदाहरणम्।

मानापनोदनविनोदनते गिरीशे
भासेव संकुचितयोरुचितं तदिन्दोः।
भेत्तुं भवानिशचितं दुरितं भवानि,
नम्रीभवानि घनमङ्घ्रिसरोजयोस्ते॥

अत्र शृङ्गारः कवेर्भवानीविषयस्य रतिभावस्याङ्गम्।

क्षिप्तोहस्तावलग्नः प्रसभमभिहतोऽप्याददानोऽंशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥

अत्र कवेः शराग्निविषयस्य रतिभावस्य करुणोऽङ्गं तस्यापि कामीवेत्युपमाबलायातः शृङ्गारः।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधरा-
स्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजोवाचस्ततो मुद्रिताः॥

अत्र पृथिवीविषयरतिभावो राजविषयरतिभावस्याङ्गम्।

वन्दीकृत्य नृप, द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे,
प्रध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥

अत्र प्रथमद्वितीयार्द्धगतौ शृङ्गाराभासभावाभासौ कविराजविषयरतिभावस्याङ्गम् ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥

अत्र भावप्रशमो भावस्य । प्राधान्येऽपि रसानां रसवदलङ्कार इत्याचार्य्याः । प्रियतराख्यानं प्रेयः, रूढ़ाहङ्कारमुर्ज्जस्वि इति च । यदाहुः ।

प्रेयः प्रियतराख्यानं रसवद्रसपेशलम् ।
उर्ज्जस्वि रूढ़ाहंकारं युक्तोत्कर्षञ्च तत् त्रयम् ॥

ध्वनिकारादयस्त्वङ्गत्वएव रसादीनां रसवदाद्यलंकारानिच्छन्ति । यदाहुः ।

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः ।
काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः ॥ इति ।

## भावोदयभावसन्धिभावशबलत्वानि तदाख्याः ॥ ११३

अपराङ्गानि भावोदयादीनि तदाख्या भावोदयभावसन्धिभावशबलत्वनामान एवालंकारा भवन्ति । क्रमेणोदाहरणानि ।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्त्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।

अन्याभिधायि तव नाम विभो, गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥

अत्र त्रासोदयः कवेराजविषयरतिभावस्याङ्गम् ।

असोढ़ा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटवटुवेशापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥

अत्रावेगधैर्य्ययोः सन्धिः कवेः स्मरहरविषयरतिभावस्य ।

पश्येत् कश्चिच्चल चपल रे, का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ़, भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्यादधानाऽभिधत्ते ॥

अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शवलता राजविषयरतिभावस्य। द्वयोः सन्धिर्बहूनां शवलतेति विशेषः। तानि खल्वमूनि व्यक्तिविवेककारादिभिर्नालङ्कारतयोक्तानि। उक्तानि तु ध्वनिकारादिभिरित्यस्माभिर्व्युत्पादितानि।

## भावाभिव्यक्तिर्भाविकम् ॥ ११४

भावः कवेरभिप्रायः। तस्य येयं रचनावशेन श्रोतॄणां चेतःस्वभिव्यक्तिस्तद्भाविकम्। उदाहरणम्।

स नर्म्मदारोधसि शीकरार्द्रै-
र्मरुद्भिरानर्त्तितनक्तमाले।

निवेशयामास विलङ्घिताध्वा
क्लान्तं रजोधूसरकेतु सैन्यम्॥

यथा वा,—

एतस्मिन् मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः।
बाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो भुवो विभागाः॥

अन्ये त्वाहुः। भूतभविष्यतोः प्रत्यक्षायमाणत्वं भाविकमिति। तत्रोदाहरणम्।

आसीदञ्जनमत्रेति पश्यामि तव लोचने।
भाविभूषणसम्भारां साक्षात् कुर्व्वे तवाकृतिम्॥

अद्भुतपदार्थस्य प्रत्यक्षायमाणत्वमपरेके भाविकमिच्छन्ति। उदाहरन्ति च,—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥

त इमे काव्यालङ्काराः प्रसिद्धा अप्रतिसिद्धाश्च केचिदिह लक्षिता उदाहृताश्च। तेषु खल्वमीषु केचिदुपमायां केचित् स्वभावोक्तौ केचिच्चातिशयोक्तौ निवेष्टुमर्हन्तीत्यमी त्रयएवालङ्काराः प्रधानतयाऽवतिष्ठन्ते। तथा ह्यनन्वयादीनां केषाञ्चिदुपमाप्रभेदेष्वाचार्य्येण परिगणना कृता। तच्चोपमाप्रकरणे प्रदर्शितमस्माभिः। प्रतिवस्तूपमाप्रभृतिरुपमाप्रपञ्च इति वामनेनाप्युक्तम्। ते खल्वलंकारा उपमाया एव प्रकारभेदा इति सहृदयतया परिभावयन्तु भवन्तः। नह्युपमातोऽत्यन्तभिन्नास्तेऽलंकारा इति

केचिदपि स्वानुभवमनपलपन्तो वक्तुमुत्सहन्ते। किञ्चिच्च वैचित्र्यं प्रसिद्धेष्वप्युपमाभेदेष्वचतमेव। तदेवं रूपकादीनां उपमाभेदतया रूपकोपमा निदर्शनोपमा दृष्टान्तोपमा व्यतिरेकोपमेत्येवमादिर्व्यपदेशो ज्यायान्। यदाहुः—

"उपमैव तिरोभूतभेदा रूपकमुच्यते"। इति।

एवमन्यत्राप्यनुसन्धेयम्। पराचीनैः प्रायः सर्व्वैरेवालंकारिकैर्भिन्नालंकारतया तेषामुपनिवन्धनादस्माभिरपि तथैव ते लक्षिताः प्रदर्शिताश्च। अन्यथा खल्वर्व्वाचीनाः पराचीनेष्वालंकारिकेषु वहुमानात् प्राचीनाविरुद्धायां तदनुमतायामप्यस्मदुक्तौ न श्रद्दध्युरुपालम्भं च कुर्य्युरिति।

तत्त्वतस्तूक्तास्त्रय एवालंकाराः सर्व्वानलंकारानभिव्याप्नुवन्ति। श्लेषोऽप्यलंकारस्तेभ्यो नातिरिच्यते। तत्त्रितयविषयपरिहारेण तस्यासम्भवादित्याहुः। रुद्रटेन तु श्लेषमपि मूलालंकारतया परिगणय्य चत्वार एवालंकारा मुख्यास्तत्प्रभेदाश्चान्ये इत्युक्तम्। इयं हि तस्य वाचोयुक्तिः

अर्थस्यालंकारा वास्तवमौपम्यमतिशयः श्लेषः।
एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः॥

भाविकन्त्वेकएवालंकारो मुख्यतया वक्तुमुचितः। उपमादीनामपि तत्रैवान्तर्भावोपपत्तेः।

## तेषां निरपेक्षाऽवस्थितिः संसृष्टिः॥ ११५

तेषामलंकाराणां परस्परनिरपेक्षा येयमेकत्रावस्थितिः, सा संसृष्टिः। उदाहरणम्।

मधुरया मधुबोधितमाधवी-
मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद-
ध्वनिभृता निभृताक्षरमुज्जगे ॥

अत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः । सेयं शब्दालंकारयोः संसृष्टिः । अर्थालंकारयोः संसृष्टिर्यथा ।

एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥

अत्र परस्परनिरपेक्षावुपमार्थान्तरन्यासौ । यथा वा,—

कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो-
वटुपरिषदं पुण्यश्लोकः श्रियेव सभाजयन् ।
पुनरपि शिशुर्भूतो वत्सः स मे रघुनन्दनो-
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥

अत्र परस्परनिरपेक्षे उपमोत्प्रेक्षे । शब्दार्थालंकारयोः खल्वपि ।

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना-
ये कालतां कुटिलतामिव न त्यजन्ति ॥

अत्रानुप्रासोपमादीपकानां संसृष्टिः ।

## उपकार्य्योपकारकभावः सङ्करः ॥ ११६

तेषामेवालङ्काराणां परस्परं योऽयमुपकार्य्योपकारकभावः स सङ्करः । उदाहरणम् ।

राजति तटीयमभिहतदानव-
रासातिपातिसारावनदा ।
गजता च यूथमविरतदानव-
रासातिपातिसारावनदा ॥

अत्र यमकप्रतिलोमानुलोमचित्रभेदयोः संकरः ।

आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटंकपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्, मुक्ताफलानां स्रज इति शबरा नैव हारं हरन्ति ॥

अत्र तद्गुणाश्रयेण भ्रान्तिमतः प्रवृत्तिस्तदाश्रयेण च तद्गुणस्य चारुत्वातिशयः ।

जटाभाभिर्भाभिः करधृतकलंकाक्षवलयो-
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।
परिप्रेङ्खत्तारापरिकरकपालांकिततले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥

अत्रोपमारूपकोत्प्रेक्षाश्लेषाणां संकरः । करधृतकलंकाक्षवलय इत्यत्रोपमा तु न शंकनीया । अक्षवलयस्यैव करधृतत्वोपपत्तेः । एवमन्यदप्युदाहार्य्यम् । अयमेवाङ्गाङ्गिभावसंकर इत्युच्यते ।

## सन्देहस्य ॥ ११७

तेषामलंकाराणां सन्देहोऽपि संकर उच्यते। यत्र किल परस्परविरुद्धानामलंकाराणां नैकत्र समावेशसम्भवः, अथच कस्यचित् साधकं बाधकं वा प्रमाणं नोपलभ्यते, तत्र सन्देह संकरः प्रवर्त्तते। उदाहरणम्।

यथा गभीरो यथा रत्ननिर्भरो यथा च निर्म्मलच्छायः।
तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृतः॥

अत्र किमप्रस्तुतस्य जलनिधेर्वृत्तान्तेन प्रस्तुतस्य कस्यचिदवगतेरियमप्रस्तुतप्रशंसा; आहोस्वित् प्रस्तुतस्य जलनिधेर्विशेषणवशादप्रस्तुतस्य प्रतिपत्तेः समासोक्तिरिति सन्देहः।

नयनानन्ददायीन्दोर्विम्बमेतत् प्रसीदति।
अधुना विनिरुद्धाशमविशीर्णमिदन्तमः॥

अत्रैतदिति वदनमुपदिश्य तत्रेन्दुविम्बत्वारोपात् रूपकम्, अथवैतदित्येतस्येन्दुविम्बपरतया मुखे तत्प्रयोगादतिशयोक्तिः, किं वा द्वयोरपि प्रस्तुतयोरप्रस्तुतयोर्वैकधर्म्माभिसम्बन्धात् तुल्ययोगिता, उतैकस्य प्रस्तुतत्वेन दीपकमाहोस्वित् प्रस्तुतादिन्दुविम्बादप्रस्तुतमुखप्रतीतेः समासोक्तिः, यद्वा तद्वैपरीत्यादप्रस्तुतप्रशंसा, किमहो भङ्ग्यन्तरेण कालविशेषोक्तेः पर्य्यायोक्तमिति सन्देहः। यत्र त्वेकतरपरिग्रहे साधकमन्यतरपरिग्रहे वा बाधकमवतरति, तत्र न सन्देह इति नायमलंकारः। यथा,—

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य।

पादाम्बुजं भवतु मे विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥

अत्र महिषासुरस्य मौलौ निधानं मञ्जीरशिञ्जितञ्च चरणस्यानुकूलं प्रतिकूलञ्चान्यमम्बुजस्य । तेनेयमुपमा, न रूपकम्, नापि तयोः सन्देहः ।

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥

अत्रापरत्वमिन्दोरनुकूलमिति रूपकमिदं, नोपमा, न खल्वपि तयोः संकरः । एवमन्यत्रापरनुसन्धेयम् ।

## एकवाचकानुप्रवेशस्त्वेकेषाम् ॥ ११८

तेषामेवालंकाराणां योऽयमेकस्मिन् वाचकेऽनुप्रवेशः सोऽपि संकर इत्येकेषां मतम् । उत्सर्गस्यापवादविषयपरिहारेण प्रवृत्तेरस्मादन्यत्र संसृष्टिः प्रतिपत्तव्या । उदाहरणम् ।

स्पष्टोल्लसत्किरणकेसरसूर्य्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुषावतार-
बद्धान्धकारमधुपावलि सञ्चकोच ॥

अत्र रूपकानुप्रासयोरेकस्मिन् पदे अनुप्रवेशः । अर्थालंकारयोरप्येवं संकरमिच्छन्ति । तत्रोदाहरणमनुसन्धेयम् ।

इत्यलङ्कारसूत्रेऽर्थालङ्कारनिरूपणपरिच्छेदः सप्तमः ।

# अष्टमः परिच्छेदः।

(दोषनिरूपणम्)

उपादेयमपि काव्यं दोषादनुपादेयतामापद्यते। अतो-यत्नतो दोषाः परिहर्त्तव्याः। यदाहुः।

तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्॥

न च स्वरूपमपरिज्ञाय दोषाः परिहर्त्तुं शक्याः। तस्माद्-दोषाणां स्वरूपमिदानीमभिधीयते,

**काव्यापकर्षहेतवः शब्दार्थरसगतास्त्रिविधा दोषाः॥१॥**

ये किल काव्यमपकर्षयन्ति ते दोषाः। ते च शब्दगता-अर्थगतारसगताश्चेति त्रिविधाः।

**अलङ्कारगताश्चैकेषाम्॥ २॥**

एकेषामाचार्य्याणां मतेनालङ्कारगताश्च दोषा भवन्ति। अन्येषान्तु मते शब्दादिदोषेष्वेवान्तर्भवन्तस्ते किल नातिरिच्यन्ते। अतिरिच्यन्तां नातिरिच्यन्तां वा सर्व्वथा सन्त्येवालङ्कारदोषा-इत्यविवादम्।

**प्रथमे वाक्यपदपदांशगतास्त्रिविधाः ॥ ३ ॥**

प्रथमे शब्ददोषा वाक्यगताः पदगताः पदांशगताश्चेति त्रिविधा-भवन्ति। तत्र,

**प्रतिकूलवर्णोपहतविसर्गविसन्धिहतवृत्तन्यूनाधिककथितास्थानस्थपदवाक्यसमाससमाप्तपुनरात्ताभवन्मतयोगसङ्कीर्णभग्नप्रक्रमामतपरार्थपतत्प्रकर्षत्वानि वाक्यदोषाः ॥ ४ ॥**

प्रतिकूलवर्णत्वादयो वाक्यदोषाः। तेषां स्वरूपाण्यभिधीयन्ते।

**रसाननुगुणवर्णत्वं प्रतिकूलवर्णत्वम् ॥ ५ ॥**

वर्णानां रसानुगुण्यमुक्तम्। उदाहरणम्।

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः॥

अत्र रौद्रे रसे मसृणा वर्णाः प्रतिकूलाः। विकटवर्णत्वं खल्वत्र भवितुमुचितम्। एवमन्यत्राप्युदाहर्त्तव्यम्।

**उपहतविसर्गत्वं विसर्गान्यथाभावः ॥ ६ ॥**

विसर्गस्य योऽयमन्यथाभावस्तदुपहतविसर्गत्वम्। अन्यथाभावश्चोत्वप्राप्त्या लोपेन वा। उदाहरणम्।

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः॥

अनेकशः प्रयोगे दोषोऽयमिति सहृदयसंवेद्यम्।

## सन्धिवैरूप्यं विसन्धिः॥ ७

सन्धिवैरूप्यञ्च त्रेधा सम्पद्यते। सन्धेरकरणेन, कृते सन्धावश्लीलत्वेन कष्टत्वेन च। सन्धेरकरणमपि वृत्तभङ्गभयेन प्रगृह्यादिहेतुकत्वेन चेति द्विधा भिद्यते। क्रमेणोदाहरणम्।

राजन्, विभाति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसम्पदमेत्य भातः॥

वृत्तभङ्गभयेन सन्धेरकरणं सकृदपि दोषः, प्रगृह्यादिहेतुकत्वसकृदिति विचारणीयम्।

वेगादुड्डीय गगने चलण्डामरचेष्टितः।
अयमुत्पतते पत्त्री ततोऽत्रैव रुचिङ्कुरु॥

अत्र लण्डा चिङ्कु इत्यश्लीलम्। कष्टत्वं खल्वपि।

उर्व्व्यसावत्र तर्व्वाली मर्व्वन्ते चार्व्ववस्थितिः।
नात्वर्जु युज्यते गन्तुं शिरो नमय तन्मनाक्॥

## वृत्तवैरूप्यं हतवृत्तत्वम्॥ ८

वृत्तं छन्दः। तस्य वैरूप्यञ्चाश्रव्यतया। अश्रव्यत्वमपि बन्धशैथिल्येन यतिभङ्गादिना वा। यतिभङ्गोऽपि पदमध्ये यतेर्निवेशनेन। क्रमेणोदाहरणम्।

धन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्यएव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढ़मनसामस्त्राणि वस्त्राणि च ॥

अत्र वस्त्राणि चेति बन्धस्य श्लथत्वम् । वस्त्राण्यपीति पाठे तु दार्ढ्यमित्यदोषः ।

सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डली-
लीलालूनपुनःप्ररूढ़शिरसो वीरस्य लिप्सोर्वरम् ।
याच्ञादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
त्वं वृणित्यभितो मुखानि स दशग्रीवः कथं कथ्यताम् ॥

अत्र शार्दूलविक्रीड़िते छन्दसि द्वादशवर्णान्ते यतिरनुशिष्टा । सा चेह पदमध्ये निवेशिता । पदान्तस्वरस्य सन्धिनिबन्धने विकारे जाते तद्युक्तव्यञ्जनवर्णात् पूर्व्वंच पदमध्येऽपि निवेशिता यतिर्न दोषायेत्याचार्य्याः । यदाहुः ।

लुप्ते पदान्ते शिष्टस्य पदत्वं निश्चितं यथा ।
तथा सन्धिविकारान्तं पदमेवेति वर्ण्यते ॥

उदाहरन्ति च ।

स्त्रीणां सङ्गीतविधिमयमादित्यवंश्यो नरेन्द्रः
पश्यत्यक्लिष्टरसमिह शिष्टैरमित्यादि दुष्टम् ।
कार्य्याकार्य्याण्ययमविकलान्यागमेनैव पश्यन्
वश्यामुर्व्वीं वहति नृप इत्यस्ति चैवं प्रयोगः ॥

सन्धिविकारान्तत्वे पदमध्यस्य पदान्तत्वाभ्युपगमेऽपि तत्र

निवेशिता यतिर्यदि श्रवणमुद्वेजयति तदा नैव तत्र सा निवेशयितव्या। तदुक्तं तैरेव।

तथापि कटु कर्णानां कवयो न प्रयुञ्जते।
ध्वजिनी तस्य राज्ञः केतूदस्तजलदेत्यदः॥

गुरुलघुवैपरीत्यमक्षरन्यूनाधिकत्वञ्चातिस्फुटत्वादुपेक्षितम्। रसाननुगुणेन खल्वपि।

हा नृप, हा बुध, हा कविबन्धो,
विप्रसहस्रसमाश्रय, देव।
मुग्धविदग्धसभान्तररत्न,
क्वासि गतः क्व वयं च तवैते॥

हास्यरसानुगुणस्यैतद्वृत्तस्य प्रस्तुतकरुणरसानुगुण्यं नास्ति। यदाहुः। करुणे पुष्पिताग्रादीनां शृङ्गारादौ पृथ्वीस्रग्धरादीनां वीरे शिखरिणीमन्दाक्रान्तादीनां हास्ये च दोधकस्यानुगुण्यमिति।

## वाच्यस्यानभिधानं न्यूनपदत्वम्॥ ९

अवश्यवक्तव्यं यत्र नाभिधीयते तत्र न्यूनपदत्वं दोषः। उदाहरणम्।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥

अत्रोषितं स्थितमित्यत्रास्माभिरिति खिन्ने इत्यतः पूर्व्वमित्थमिति च न्यूनम्।

## झटित्यर्थावगतौ न दोषः ॥ १०

न्यूनपदत्वमित्येव । उदाहरणम् ।

तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं
सा चात्यन्तमगोचरं नयनयोर्जातेति कोऽयं विधिः ॥

अत्र प्रभावपिहितेत्यनन्तरं भवेदित्यनन्तरञ्च नैतत् यत इत्येतानि पदानि न्यूनानि । एतेषां पदानां न्यूनतायामपि तिष्ठेदित्यादिवाक्यजन्यप्रतिपत्तेर्दीर्घमित्यादिवाक्यजन्यप्रतिपत्त्या बाधः झटित्यवभासते । यथा वा,—

गाढ़ालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद, माऽति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥

आनन्दमग्नादीनामुक्तौ न्यूनपदत्वं न परं न दोषः, किन्तु गुण एव । यथोदाहृते गाढ़ालिङ्गनेत्यादाविति मम्मटभट्टप्रभृतयः । वाग्भटादीनां मते त्वदोषतामात्रमिति ।

## यद्विनाऽपार्थोऽवगम्यते तदुक्तावधिकपदत्वम् ॥ ११

उदाहरणम् ।

दलत्कन्दलभाग्भूमिः सनवाम्बुदमम्बरम् ।
वाप्यः फुल्लाम्बुजयुजो जाता दृष्टिविषं मम ॥

अत्र, भजि: स-शब्द: युजिस्थाधिक: । तद्विनाऽप्यर्थावगते: ।

## विच्छित्तिविशेषावहत्वे गुण: ।। १२

अधिकपदत्वमित्येव । यथा,—

तव प्रसादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्य्यां हरस्यापि पिनाकपाणे-
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये ॥

अत्र हरस्येति पिनाकपाणेरिति चैकमधिकमपि विच्छित्ति विशेषं पुष्णाति । यथा वा,—

अस्या: कर्णावतंसेन जितं सर्व्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्या: श्रवणकुण्डलम् ॥

कुण्डलावतंसयो: कर्णाभरणत्वेऽपि कर्णश्रवणशब्दौ तत्र तदानीं तयो: स्थितिप्रतिपादनार्थम् । तेन च कुण्डलावतंसयो: स्वतो नोत्कर्ष: किन्तु तत्कर्णस्थित्येति तस्या उत्कर्षातिशय-प्रतिपत्ति: । यथा वा,—

अपूर्व्वमधुरामोदप्रमोदितदिशस्तत: ।
आययुर्भृङ्गमुखरा: शिर:शेखरशालिन: ॥

अत्र शिर:शब्द: । यथा वा,—

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभि: ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥

हारपदस्यैव मुक्ताहाराभिधायकत्वेऽपि मुक्तानां रत्नान्तरा-मिश्रितत्वप्रतिपत्तये मुक्ताशब्द: । यथा वा,—

सौन्दर्य्यसम्पत् तारुण्यं यस्यास्ते ते च विभ्रमाः ।
षट्पदान् पुष्पमालेव कान् नाकर्षति सा सखे ॥

निरुपपदस्य मालाशब्दस्य पुष्पस्रङ्मात्राभिधायकत्वेऽपि पुष्पानामुत्कृष्टत्वावबोधाय पुष्पशब्दः । यथा वा,—

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे ।
धनुर्ज्याकिणबन्धेन दोष्णा विस्फुरितं तव ॥

अत्र धनुःशब्दो ज्याया धनुष्याततीक्ष्णतत्वप्रतिपादनाय । यत्र तु तथा प्रतिपत्तिर्नापेच्चिता, तत्र केवलो ज्याशब्दएव प्रयुज्यते । यथा,—

ज्याबन्धनिष्पन्दभुजेन यस्य
विनिश्वसद्वक्त्रपरम्परेण ।
कारागृहे निर्ज्जितवासवेन
लङ्केश्वरेणोषितमा प्रसादात् ॥

अनयैव रीत्या द्विरदबृंहितादिकमपि समर्थनीयम् । तदेतत् स्थितस्यैव समर्थनं, न त्वेतावता चिरन्तनैरनुपनिबद्धं जघनकाञ्चीत्यादिकमप्युपनिबद्धव्यमित्याहुः ।

**एकस्य पदस्यासकृदभिधाने कथितपदत्वम् ॥ १३**

उदाहरणम् ।

सामोपायनयप्रपञ्चपटवः प्रायेण ये भीरवः
शूराणां व्यवसायएव हि परं संसिद्धये कारणम् ।
उद्गर्ज्जद्विकटाटवीगजघटापीठैकसञ्चर्णन-
व्यापारैकरसस्य सन्ति विजये सिंहस्य के मन्त्रिणः ॥

अत्रैकेति द्विरभिहितम् ।

## अर्थान्तरसंक्रमितवाच्यविहितानुवादलाटानु-
## सादिषु गुणः ॥ १४

कथितपदत्वमित्येव। उदाहरणम्।

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

अत्रार्थान्तरसंक्रमितवाच्यो ध्वनिः।

उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥

अत्र विहितानुवादः। अत्र रक्त एवास्तमेतीति यदि क्रियेत, तदाऽन्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति।

सितकरकररुचिरविभा
विभाकराकार, धरणिधर, कीर्त्तिः।
पौरुषकमला कमला
साऽपि तवैवास्ति नान्यस्य ॥

अत्र लाटानुप्रासः। आदि ग्रहणाद्विषादविस्मयादिकमप्यस्य विषयतया बुभुत्सितव्यम्।

## अनुपयुक्तस्थाने पदन्यासोऽस्थानस्थपदत्वम् ॥१५

उदाहरणम्।

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितकन्धरेन्दुशकलेनान्तःकपोलस्थलम्।

पार्व्वत्या नखलक्ष्मशङ्कितसखीनर्म्मस्मितव्रीड़या
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः॥

अत्र नखलक्ष्मेत्यादितः पूर्व्वं कुटिलाताम्रच्छविरिति न्यस्तव्यम्। ततो हि नखलक्ष्मशङ्का समुन्मिषति। यथा वा,—

मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्द्ध्नि घर्म्मः कठोरः।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिः शिक्षिता वीक्षिता च॥

अत्र तदिति प्रथमार्द्धे पठितुमुचितम्। यथा वा,—

शक्तिनिस्त्रिंशजेयं तव भुजयुगले नाथ, दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः।
आज्ञेयं सर्व्वगा ते विलसति च पुनः किं मया वृद्धया ते
प्रोचेरवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्त्या प्रयातम्॥

अत्र परामृश्यमानवाक्यानन्तरमेवेत्थंपदप्रयोगो युक्तः। तेन, इत्थं प्रोचेरवेति वाच्यम्। यथा वा,—

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी॥

अत्र त्वमित्यनन्तरं चकारो युक्तः। पदं विभक्त्यन्तं, तच्चाव्ययमपीत्यवगन्तव्यम्।

## वाक्योपन्यासेऽस्थानस्थवाक्यत्वम्॥ १६

अनुपयुक्तस्थाने इत्यनुवर्त्तते। उदाहरणम्।

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिणाकिनि पदं लङ्केति दिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः, क्व नु पुनः सर्व्वत्र सर्व्वे गुणाः॥

अत्र न रावण इत्येतावतैव समापनीयम्। क्व नु पुन-रित्यादिवाक्यान्तरोपन्यासो हि रावणस्योपादेयत्वमवगमयति न त्याज्यत्वमित्यस्थानएवोपन्यासस्तस्य। अमुमपदयुक्तनामान-मर्थदोषमाहुरन्ये।

## एतेनास्थानस्थसमासत्वं व्याख्यातम्॥ १७

एतेनास्थानस्थपदवाक्यत्वव्याख्यानेन। अनुपयुक्तस्थाने समासकरणेऽस्थानस्थसमासत्वमित्यर्थः। उदाहरणम्।

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणं
फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी॥

अत्र कोपिन उक्तौ दीर्घसमासो न कृतः कवेरुक्तौ तु कृतः।

## समाप्तस्य पुनरादाने समाप्तपुनरात्तत्वम्॥ १८

क्रियाकारकान्वयेन समाप्तं वाक्यं यत्र पुनरादीयते, तत्र समाप्तपुनरात्तत्वम्। पुनरादानञ्च वाक्यान्वयिनः कस्यचिद्विशे-

षणदानेन क्रियान्वयिकारकान्तरोपादानेन वा। क्रमेणोदाहरणम्।

नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः।
पतन्ति शशिनः पादा भासयन्तः क्षमातलम्॥

अत्र चतुर्थपादो वाक्यान्वयिशशिपादानां विशेषणम्।

गाथानां रसा महिलानां विभ्रमाः कविवराणां वचनानि।
कस्य न हरन्ति हृदयं बालानां च मन्मनोल्लापाः॥

अत्र चतुर्थपादे क्रियान्वयिकारकान्तराभिधानम्। यथा वा,

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।
तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्त्तिः॥

तेनाम्बीत्यादिना विधिक्रियान्वयिकर्त्तृकारकान्तरमभिहितम्। अत्रोदाहरणे त्यक्तपुनःस्वीकृतत्वलक्षणोऽर्थदोष इति केचित्। तच्चिन्त्यम्। विशेषणदानवत् कारकान्तराभिधानेऽपि वाक्यदोषत्वस्यैवोचितत्वात्। किञ्च, न खल्वत्र त्यक्तो वाक्यार्थः पुनः स्वीक्रियते। किन्तु समाप्तं वाक्यमेव पुनरादीयते। तस्माद्वाक्यस्यैव दोषोऽयं न त्वर्थस्य। यत्र तु वाक्यान्तरमेव क्रियते न तु पूर्ववाक्यान्वयि किञ्चिदुपादीयते, तत्र नायं दोषः। यथा,

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाविधाऽऽविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते॥

## अभिप्रेतसंबन्धानुपपत्तावभवन्मतयोगत्वम् ॥ १९

कवेरभिप्रेतः संबन्धो यत्र नोपपद्यते, तत्राभवन्मतयोगत्वम् । उदाहरणम् ।

येषान्तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।
येषां हुङ्कृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किन्तैस्त्वत्परितोषकारि विहितं किञ्चित् प्रवादोचितम् ॥

अत्र यच्छब्दनिर्दिष्टानां वाक्यानामुद्देश्यतया परस्परसम्बन्धायोगात्तदेकान्तःपातिना क्षपाचारिपदेनापरवाक्यद्वयोपात्तयोर्यच्छब्दयोः संबन्धः कवेरभिप्रेतो नोपपद्यते । क्षपाचारिभिरिति पाठे तु मतयोगो भवति ।

## वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशे सङ्कीर्णत्वम् ॥ २०

उदाहरणम् ।

आयाति चन्द्रः पवनः समुदेति च दक्षिणः ।
निरन्तरायमधुना साम्राज्यं चित्तजन्मनः ॥

अत्र दक्षिणः पवन आयाति चन्द्रः समुदेतीति सङ्कीर्णम् । द्रागर्थप्रतिपत्तिसम्भवेऽप्ययं दोषो भवतीति कष्टत्वादस्य व्यतिरेको बुभुत्सितव्यः ।

## उपक्रमभङ्गे भग्नप्रक्रमत्वम् ॥ २१

येन रूपेण वाक्यमुपक्रम्यते तेनैव रूपेण तत् समापनीयमिति स्थितिः। तद्भङ्गने भग्नप्रक्रमत्वम्। तच्च प्रकृति-प्रत्ययादिविषयभेदादनेकविधम्। उदाहरणम्।

माघे निशाया नियतेर्नियोगा-
दस्तं गते हन्त निशाऽपि याता।
कुलाङ्गनानां हि दशाऽनुरूपं
नातः परं भद्रतरं समस्ति॥

अत्र गते इत्युपक्रान्ते यातेति प्रकृतेः। गता निशाऽपीति पठिते प्रकृतिविषयं भग्नप्रक्रमत्वं परिह्रियेत, पौर्व्वापर्य्यविषयन्तु नैव परिह्रियते। पूर्व्वत्र कर्त्तारमभिधाय क्रियाया अभिधानादत्र च तद्वैपरीत्यात्।

यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यामतिवर्त्तितुं वा।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः॥

अत्र प्रत्ययस्य। सुखमीहितुं वेति पाठे त्वदोषः। यथा वा,

काचित् कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत् कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्य्यः शशंसुः॥

अत्र वचनादेः। काश्चित् कीर्णारजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुलक्ष्म्यो निःश्रीका इति, कम्पमापुरिति च युक्तम्। यथा वा,—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः॥

अत्र कारकस्य वचनस्य च। यथा वा,—

विपदोऽभिभवन्त्यविक्रमं
रहयत्यापदुपेतमायतिः।
नियता लघुता निरायते-
रगरीयान्न पदं नृपश्रियः॥

अत्र पर्य्यायोपसर्गयोः। तदभिभवः कुरुते निरायतिं लघुतां भजते निरायतिर्लघुतावान्न पदं नृपश्रिय इति युक्तम्। एवं,

पाश्चात्यभागमिह सानुषु सन्निषण्णाः
पश्यन्ति शान्तमलसान्द्रतरांशुजालम्।
संपूर्णलब्धललनालपनोपमान-
मुत्सङ्गसङ्गिहरिणस्य मृगाङ्कमूर्त्तेः॥

अत, उत्सङ्गसङ्गतमृगस्य मृगाङ्कमूर्त्तेरिति पठितव्यम्। तथा,

बभूव भस्मैव सिताङ्गरागः
कपालमेवामलशेखरश्रीः।

उपान्तभागेषु च रोचनाङ्को-

गजाजिनस्यैव दुकूलभावः ॥

अत्र, रोचनाङ्कं गजेन्द्रचर्म्मैव दुकूलमस्येति पठनीयम्। दिङ्मात्रं प्रदर्शितं, बहवस्त्वस्य विषयाः समुत्प्रेक्षितव्याः ॥

## व्यङ्ग्ययोः परस्परविरोधेऽमतपरार्थत्वम् ॥ २२

उदाहरणम्।

राममन्मथशरेण ताड़िता

दुःसहेन हृदये निशाचरी।

गन्धवद्रुधिरचन्दनोक्षिता

जीवितेशवसतिं जगाम सा ॥

अत्र बीभत्सशृङ्गारौ द्वावपि व्यङ्ग्यौ परस्परविरुद्धौ च। तत्र बीभत्सः प्रकृतः, शृङ्गारस्तु न तथेति विशेषः। विरोधिनोरेकत्र निवेशनाद्वाक्यमेव दुष्टं न तु तावित्यनुसन्धेयम्।

## क्रमेणोत्कर्षहानौ पतत्प्रकर्षत्वम् ॥ २३

उदाहरणम्।

कण्ठीरवः प्रचण्डोऽसौ सटाभिर्नखराङ्कुशैः।

समुत्प्लुत्य क्षणादेव हतवान् यूथनायकम् ॥

अत्र परुषवर्णाड़म्बरः पतितः। स किल वाच्यस्योद्धतत्वादुत्कृष्टः। यथा वा,—

कः कः कुत्र न घुर्घुरायितघुरी घोरो घुरेच्छूकरः

कः कः कं कमलाकरं विकमलं कर्त्तुं करी नोद्यतः।

के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहोस्नेहविलासवद्धवसतिः पञ्चाननो वर्त्तते ॥

अत्र क्रमेणानुप्रासप्रकर्षः पतितः। तदत्रार्द्धान्तरैकपदत्वमस्थानत्वपदत्वेऽन्तर्भवति। अस्थानं हि तस्य तथा- तत्। चोदाहृतम्। एवमक्रमत्वमपि। वाच्यस्यानभिधानञ्च न्यूनपदत्वे। प्रसिद्धिविरोधस्तु न परं वाक्यदोषः किन्त्वन्यस्यापीति वक्ष्यामः।

केचित्—वाक्यान्तरे वाक्यान्तरानुप्रवेशे गर्भितत्वं नाम वाक्यदोषमिच्छन्ति। उदाहरन्ति च।

मार्गे कर्दमदुस्तरे जलभृते गर्त्ताशतैराकुले
खिन्ने शाकटिके भरेऽतिनिभृते दूरोद्धुरे रोधसि।
शब्देनैतदहं ब्रवीमि महता कल्लोच्छ्रितां तर्जनी-
मीदृक्षे विषमे विहाय धवलं वोढुं क्षमः को भरम् ॥

अत्र तृतीयपदवाक्यं वाक्यान्तरमध्येऽनुप्रविष्टम्। क्वचिद्विच्छित्तिविशेषावहत्वमप्याहुः। तत्रोदाहरणम्।

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा साऽपि वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो-
यस्मात् प्रादुरभूत् कथाऽद्भुतमिदं येनैव चास्तं गतम् ॥

अत्र वदन्तएवेत्यादिवाक्यं वाक्यान्तरमध्येऽनुप्रविष्टं चमत्कारातिशयं पुष्णाति। विचार्य्यमाणे त्वस्यादोषत्वमेव प्रतिभाति। सर्व्वत्रैवार्थोक्तौ यत् वाक्यान्तरं निवेश्यते तत् किञ्चित् प्रयोजनमभिसन्धायैव। यथोद्धृते मार्गे कर्दमदुस्तरे इत्यादौ

तृतीयपादवाक्यस्य वाक्यान्तरमध्ये निवेशः स्ववक्तव्येऽर्थे दृढ़-प्रत्ययोत् पादनाय ।

भवाम्यपहस्तितरेखो निरंकुशोऽथ विवेकरहितोऽपि ।
स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि ॥

इत्यादौ प्रतीहीति मध्ये दृढ़प्रत्ययोत्पादनायेति तेषामपि सिद्धान्तः । एवञ्च,

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥

इदमप्युदाहरणं भवाम्यपहस्तितरेख इत्यादिप्रत्युदाहरण-समानयोगक्षेममेव । नात्र कश्चिदपि विशेषः समुत्प्रेक्षितुं शक्यः ।

योग्यो यस्ते पुत्रः सोऽयं दशवदन, लक्ष्मणेन मया ।
रक्षैनं मृत्युमुखं प्रसह्य लघु नीयते विवशः ॥

अत्रापि रक्षैनमिति मध्यप्रविष्टवाक्यं वक्तुरतिशयितवीर-भावमवबोधयति । सोऽयं गुणएव दोषाभिमानः कथमिति न खल्वधिगच्छामि । झटित्यर्थानवबोधे तु कष्टत्वमेव दोष इति विभावनीयम् । वाग्भटस्तु, यत्रैकं पदं द्वयोर्वाक्ययोरन्वेति तत्रार्थान्तरैकवाचकं नाम वाक्यदोषमाह । तत्रोदा हरणम् ।

कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विडम्बः ॥

अत्र यातीति पदं द्वयोर्वाक्ययोरन्वेति। प्रतिकूलवर्णत्वं समासगतत्वे पददोषोऽपि भवतीत्यादिकमुन्नेयम्।

च्युतसंस्कृत्यप्रयुक्ताविमृष्टविधेयांशविरुद्धमति-
कारित्वानि पदवाक्ययोः॥ २४

संस्कृतिः संस्कारः। च्युतसंस्कारादयो दोषाः पदे वाक्ये च भवन्ति। तत्र,

व्याकरणलक्षणलङ्घनं च्युतसंस्कृतित्वम्॥ २५

पदे यथा,

संमूर्च्छदुच्छृङ्खलशङ्खनिस्वनः
स्वनुप्रयाति पटहस्य शार्ङ्गिणि।
सत्वानि निन्ये नितरां महान्त्यपि
व्यथां द्वयेषामपि मेदिनीभृताम्॥

अत्र द्वयेषामिति। यथा वा,

उन्मज्जच्छफर इवामरापगाया-
वेगेन प्रतिमुखमेत्य बाणनद्याः।
गाण्डीवी कनकशिलानिभं भुजाभ्या-
माजघ्ने विषमविलोचनस्य वक्षः॥

अत्राजघ्ने इति। आङ्पूर्व्वस्य हनः स्वाङ्गकर्म्मकस्यैवात्मनेपदं लक्षणेनानुशिष्टमिह तु तल्लङ्घितम्। पदान्तराणां परिवर्त्तनेऽपि दोषस्य तादवस्थ्यात्तस्याजघ्ने इति पदान्वयव्यतिरेकानुविधायित्वात् पददोषोऽयं न वाक्यदोष इत्याहुः।

वाक्ये यथा,

आहन्ति निजवच्चोऽसौ कुटुम्बानुच्चरत्यपि।
तपस्तपति नो किञ्चित् परिक्रीड़ति निर्भरम्॥

अत्र, आहते उच्चरते तप्यते परिक्रीड़ते इति प्राप्नोति। यथा वा,

परिष्कृतायाः सततं यस्तु वाचस्यतीयते।
सम्पदा जटया वाऽपि पुत्रीयति स पूरुषः॥

पदमात्रदोषोऽयमिति केचित्। उदाहरणन्तु वाक्येऽपि प्रचरति। वाग्भटोऽपि वाक्यगतत्वमप्यस्याङ्गीचकार। उदाहृतञ्च तेन।

प्रदत्तं नैव यैः स्वीयविभवस्फीतमानतः।
तपो न तपितं किञ्चित्तेषां जन्मस्य किं फलम्॥

अत्र, स्वकीयेति स्फीतीति तप्तमिति जन्मन इति च प्राप्नोति।

## कवीनामप्रयोगादप्रयुक्तत्वम्॥ २६

पदे यथा,

षट्पदौघैः स्तूयमानो भाति पद्मः सरोवरे।

अत्र पद्मशब्दः पुंस्याम्नातोऽपि कविभिर्न तथा प्रयुक्तः। वाक्ये यथा,

धत्ते तेजोभिराधिक्यं दैवतोऽयं सहस्रगुः।

दैवतशब्दः पुंसि सहस्रगुशब्दश्चादित्ये न प्रयुक्तः। श्लेषादौ त्वयं दोषो न भवति।

## विधेयांशस्याविमर्शोऽविमृष्टविधेयांशत्वम्॥ २७

यत्र यद्विधेयं तत्र तस्य विशेषतोऽनिर्देशे अविमृष्टविधेयांशत्वं विधेयाविमर्शश्चोच्यते। उदाहरणम्।

मूर्द्धामुद्वृत्तकृत्ताऽविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत्प्रयासः॥

अत्र मिथ्यामहिमत्वं नानुवाद्यं किन्तु महिम्नोमिथ्यात्वं विधेयम्। सोऽयं समासगतः पददोषः। प्रकारान्तरेणासम्भवात्। वाक्ये यथा,

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः॥

अत्रायमेव न्यक्कार इति वक्तुमुचितम्। उद्देश्यमुक्त्वैव विधेयाभिधानस्यौचित्यात्। तत्र च पदरचना विपरीता कृतेति वाक्यगतोऽत्रायं दोषः। न खलु न्यक्कारे इदम्पदार्थत्वं विधीयते अपि त्विदम्पदार्थएव न्यक्कारत्वमिति। एवं, किमेभिरित्यनेन भुजानां वृथात्वं विधीयते। न च वृथोच्छूनानां भुजानां वृथात्वं विधातुमुचितं किन्तूच्छूनानामेव। एवञ्च वृथात्वविशेषितमुच्छूनमत्र नानुवाद्यं, किन्तूच्छूनत्वमात्रम्। यथा वा,

अपाङ्गसंसर्गि तरङ्गितं दृशो-
र्भ्रुवोररालान्तविलासि वेल्लनम्।
विसारि रोमाञ्चितकञ्चुकं तनो-
स्तनोति योऽसौ सुभगे, तवागतः॥

उद्देश्यवाक्यगतं यत्पदं विधेयवाक्यगतं तत्पदं तत्पदसमानार्थमिदमेतददःपदं वाऽवश्यमपेक्षते । अन्यथा निराकाङ्क्षत्वानुपपत्तेः । यच्छब्दस्याव्यवधानेन तुल्यविभक्तिलिङ्गतया निर्द्दिष्टास्तु तदादिशब्दाः प्रसिद्धिमात्रं परामृशन्त उद्देश्यवाक्यएवान्तर्भवन्ति । न जात्वपि विधेयार्थं प्रतिपादयितुमर्हन्ति । एवञ्च योऽसावित्यत्रादःपदार्थस्य विधेयतयाऽनवगमाद्विधेयाविमर्शो दोषः । तनोति योऽसौ सुभगे स आगत इति तु युक्तम् । अतएव,

करवालकरालदोःसहायो-
युधि योऽसौ विजयार्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्य्ये
विनियुज्येत ततः क्षतं क्षतं स्यात् ॥

इत्यत्र योऽसावित्युक्त्वा स इत्युक्तम् । भिन्नलिङ्गविभक्तिकतया निर्द्दिष्टानां यच्छब्दनिकटस्थितानामपि तदादिशब्दानां विधेयवाक्यप्रविष्टतया तदर्थस्य विधेयताऽवगतिर्भवत्येव । यथा,

विभाति मृगशावाक्षी येदं भुवनभूषणम् ।
इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः ॥
कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते,
धुर्य्यां लक्ष्मीमथ मयि भृशं धेहि देव, प्रसीद ।
यद्यत् पापं प्रतिजहि जगन्नाथ, नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन्, भूयसे मङ्गलाय ॥

तत्र यद्यदिति वीप्सायां द्विरुक्तम् । तच्छब्देन तथाभूतएव सोऽर्थः परामृश्यते । अतएव तच्छब्दस्य वीप्सितार्थबोधक-

तया न तस्य द्विर्व्वचनम् । उत्तरवाक्यगतत्वेनोपात्तस्तु यच्छब्दः सामर्थ्यात् पूर्व्ववाक्यगतस्य तच्छब्दस्योपादानं नापेक्षते । यथा,

साधु चन्द्रमसि पुष्करैः कृतं
मीलितं यदभिरामताऽधिके ।
उद्यता जयिनि कामिनीमुखे
तेन साहसमनुष्ठितं पुनः ॥

प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दोऽपि यच्छब्दोपादानं नापेक्षते । क्रमेणोदाहरणम् ।

तृष्णापहारी विमलो द्विजावासो जनप्रियः ।
ह्रदः पद्माकरः किन्तु बुधस्त्वं स जडाशयः ॥

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वोक्षिताऽसि ॥

क्वचित् द्वयमपि सामर्थ्यादवगम्यते । यथा,

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्म्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

अत्र य उत्पत्स्यते अस्ति वा, तं प्रतीति गम्यते ।

## अनभिमतार्थप्रतीतौ विरुद्धमतिकारित्वम् ॥ २८

पदे यथा,

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः ।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ॥

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे बुद्धिं करोति ।
वाक्ये यथा,

अनुत्तमानुभावस्य परैरपिहितौजसः ।
अकार्य्यसुहृदोऽस्माकमपूर्व्वाश्चित्तवृत्तयः ॥

अत्र, उत्कृष्टानुभावस्य शत्रुभिरनाच्छादिततेजसः कार्य्यं विना सुहृदश्चित्तवृत्तय उत्कृष्टा इति तावद्विवक्षितोऽर्थः । निकृष्टानुभावस्य शत्रुभिराच्छादिततेजसः अकार्य्येषु सुहृदः चित्तवृत्तयोऽशब्दपूर्व्वा अर्थात् न सन्त्येव इति विरुद्धा बुद्धिरुत्पद्यते । यथा वा, लग्नं रागावृताङ्ग्या इत्यादौ विदितं तेऽस्तु इत्यनेन श्रीस्तस्मादपसरतीति विरुद्धमवगम्यते ।

## निरर्थकत्वं पदस्य ॥ २९

उदाहरणम् ।

उत्फुल्लकमलकेसरपरागगौरद्युते, मम हि गौरि ।
अभिवाञ्छितं प्रसिद्ध्यतु भगवति, युष्मत्प्रसादेन ॥

अत हिशब्दो वृत्तपूरणमात्रप्रयोजनत्वान्निरर्थकः। नायं वाक्यदोषः। हिप्रभृतीनां वाक्यघटकत्वासम्भवात्। न हि वृत्तं वाक्यम्। आकाङ्क्षादिमत्पदसमुदायो हि वाक्यम्। काव्यानुशासने तु वाक्यदोषत्वमप्यस्याङ्गीकृतम्। उदाहृतञ्च तत्रैव।

वल्यरिक्तत्वरी पातां साम्बुव्यम्बुघनोपमौ।
सदृशौ वककाकाभ्यां च वै हि तु च वै हि तु॥

केचित्तु पादपूरणमात्रप्रयोजनं चादिपदं निरर्थकमिति निरूप्यापि,

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम्।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो-
भल्लीनामिव पानकर्म्म कुरुते कामं कुरङ्गेक्षणा॥

इत्यत्र कुरङ्गेक्षणाया एकस्या एवोपादानात् दृशामिति बहुवचनं निरर्थकमिति पदांशगततयोदाहरन्ति। तदत्र तएव प्रष्टव्याः। अनौचित्यन्तु स्यात्। नेयं च्युतसंस्कृतिः। भिन्नवाक्यतापत्ते सामान्यविहितानां विभक्तीनां सर्व्वत्र सुलभत्वात्। विशेषविधीनां नियमार्थतायामपि संख्याविशेषस्याविवक्षायां सामान्येन प्राप्तानां प्रयोगे बाधकाभावः। गुरू्त्वत्यादिवच्च बहुवचनस्योपपत्तिरनुचिन्तनीया।

## श्रुतिकटुसन्दिग्धासमर्थत्वानि पदवाक्यपदांशेषु॥३०

एते त्रयो दोषाः पदे वाक्ये पदांशे च भवन्ति। तत्र,

## परुषवर्णत्वं श्रुतिकटुत्वम् ॥ ३१

वर्णानां पारुष्यं श्रवणोद्वेजकत्वादवसेयम् । पदे यथा,

कार्त्तार्थ्यमेषा लभतामनुरूपेण सङ्गता ।
लतेव सहकारेण शर्व्वरीव हिमांशुना ॥

वाक्ये यथा,

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट
पितॄनतार्प्सीत् सममंस्त बन्धून् ।
व्यजेष्ट षड्‌वर्गमरंस्त नीतौ
समूलघातं न्यवधीदरींश्च ॥

पदांशे यथा,

तद्‌गच्छ सिद्ध्यै कुरु देवकार्य्य-
मर्थोऽयमर्थान्तरभाव्य एव ।
अपेक्षते प्रत्ययमुत्तमं त्वां
वीजांकुरः प्रागुदयादिवाम्भः ॥

अत्र द्ध्यै इति ।

## वैयाकरणे प्रतिपाद्ये तस्मिन् कुपिते च वक्तरि समुद्धते वाच्ये रौद्रवीरवीभत्सेषु च गुणः ॥ ३२

श्रुतिकटुत्वमित्येव । प्रतिपाद्यो बोद्धव्यः । तस्मिन् वैयाकरणे । क्रमेणोदाहरणम् ।

यदा त्वामहमद्राक्षं शब्दविद्याविशारदम् ।
उपाध्यायं तदाऽस्मार्षं समस्प्राक्षञ्च सम्मदम् ॥

अत्र वैयाकरणः प्रतिपाद्यः ।

दिधीवेवीट्समः कश्चिद्गुणवृद्ध्योरभाजनम् ।
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते ॥

अत्र वैयाकरणो वक्ता ।

रक्ताशोक, कृशोदरी क्व नु गता त्यक्ताऽनुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद—
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥

अत्र शिरोधूननेन कुपिते वक्तरि परुषा वर्णाः । यथा वा,

तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिसितैर्भिन्दन् मनो निर्भरम् ।
शम्भोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानल-
ज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना ॥

अत्र शृङ्गारे कुपितो वक्ता ।

मातङ्गाः, किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः,
सारङ्गा महिषा मुदं व्रजत किं शून्येषु शूरा न के ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुनः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत् तद्गर्ज्जितं गर्ज्जितम् ॥

अत्र सिंहे वाच्ये परुषाः शब्दाः । रौद्रवीरबीभत्सेषूदा-
हृतम् ।

अनेकार्थतया संशयकारित्वं सन्दिग्धत्वम् ॥ ३३

पदे यथा,

आलिङ्गितस्तत्र भवान् सम्पराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥

अत्र वन्द्यामिति किं वन्दनीयामाशीःपरम्परामुत वन्द्यां हठहृतमहिलायां कृपां कुर्व्विति सन्देहः । वाक्ये यथा,

सुरालयोल्लासपरः प्राप्तपर्य्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥

अत्र सुरालयादिशब्दाः किं देवालयसेनाशरविभूत्यर्थाः किं वा मदिरालयकम्पपर्य्यटनभस्मार्थाः । तेन च कश्चिदत्रोपश्लोक्यते निन्द्यते वेति सन्देहः । पदांशे यथा,

कस्मिन् कर्म्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥

अत्र साधुचरेति किं पूर्व्वं साधुरथवा साधुषु चवतीति सन्देहः । यत्र त्वनेकार्थत्वं विवक्षितं, तत्र नायं दोषः । यथा,

अभिधाय तदा तदप्रियं
शिशुपालोऽनुशयं परं गतः ।
भवतोऽभिमनाः समीहते
सरुषः कर्त्तुमुपेत्य माननाम् ॥

अत्रानुशयः कोपः पश्चात्तापश्च । अभिमनाः निर्भीकमनाः अभिमुखमनाश्च । मानना पूजा हननञ्च । सन्दिग्धत्वमर्थ दोषोऽप्यस्ति । स त्वन्यविधएव ।

## विवक्षितार्थप्रतीत्यनभिनिष्पत्तावसमर्थत्वम् ॥ ३४

यत्र विवक्षितार्थप्रतीतिर्न निष्पद्यते निष्पद्यमाना वा नाभिनिष्पद्यते तत्रासमर्थत्वं दोषः। नानार्थशब्दानामनेकार्थस्याभिधेयत्वनयेऽपि प्रथमं प्रतीतिपथमवतरता प्रसिद्धेनार्थेनाप्रसिद्धोऽर्थस्तिरोधीयते। अभवन्मतयोगस्य तु नियमेन वाक्यगततया पृथगभिधानम्।

तदेतत्, यत् तदर्थं पठितमपि तदर्थे शक्तिविधुरं तदर्थविबोधयिषया तस्य प्रयोगे, उभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगे, रूढ़िप्रयोजननिर्व्यपेक्षतयाऽशक्तिकृते लाक्षणिकशब्दप्रयोगे, अवाचकशब्दप्रयोगे च भवतीति चतुर्धा भिद्यते। तत्राद्यः प्रकारोऽसमर्थः द्वितीयो निहतार्थस्तृतीयो नेयार्थश्चतुर्थस्त्ववाचक इति चत्वार एवामी दोषाः न त्वेकस्य दोषस्य प्रकारचतुष्टयमिति बहवः। अवाचकत्वमपि शक्तिविधुरतया वा उपसर्गयोगादर्थान्तरपरतया वेति द्विधा भिद्यते इति चाहुः। तत्र प्रथमः प्रकारः पदे यथा,

> तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः।
> सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम्॥

अत्र हन्तीति गमनार्थे पठितमपि तत्र शक्तिविधुरम्। गमनार्थे पाठस्तु पद्धतिरित्यादौ पदादिपदसहकारेण तदर्थबोधनाय। वाक्ये यथा,

> नानाविधानि वस्त्राणि धावत्येष नदीं हतः।

अत्र धाविः शुद्धार्थे पठितोऽपि न तत्र शक्तः। वाग्भटे नाप्येवमुदाहृतम्। पदांशे यथा,

नदीहृतश्चतुर्दश्यां स्नात्वा तर्पयते यमान्।

केचिदस्य प्रकारस्य पदमात्रगतत्वमाहुः। द्वितीयः प्रकारः पदगतो यथा,

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा॥

अत्र शोणितशब्दस्य रुधिररूपोऽर्थः प्रसिद्धः न त्वारक्तीकृतः। यथा वा,

खगैररीणां तस्तार शिरोभिः समराङ्गनम्।

अत्र खगशब्दस्य विहगः प्रतिद्धोऽर्थो न शरः।

वाक्यगतो यथा,

सायकसहायबाहो, मकरध्वजनियमितक्षमाधिपते।
अब्जरुचिभास्वरस्ते भातितरामवनिप, श्लोकः॥

अत्र सायकमकरध्वजक्षमाऽब्ज्श्लोकशब्दानां शरकन्दर्पक्षान्तिसरोजपद्यानि प्रसिद्धा अर्थाः, खड्गजलधिभूमिचन्द्रयशांसि त्वप्रसिद्धाः। पदांशगतो यथा,

यमुनाशम्बरमम्बरं व्यतानीत्।

अत्र शम्बरशब्दस्य दैत्यभेदः प्रसिद्धोऽर्थः न जलम्। तृतीयः पदे यथा,

दृष्टां चन्द्रमसा सेयमावध्नातुरसि स्रजम्।

अत्र चन्द्रमःशब्देन चन्द्रशब्दो लक्ष्यते, तेन च स्वर्णप्रतिपत्तिरभिप्रेता। वाक्ये यथा,

पंक्तिस्यन्दननाम्नोऽसौ सूनुं भीमैः शिलीमुखैः।
निहन्त्वुलूकजिन्नामा हरिसैन्यविमर्द्दनः॥

अत्र पंक्तिशब्देन दशशब्दः स्यन्दनशब्देन च रथशब्दो लक्ष्यते। तेन च दशरथनाम्न इत्यभिप्रेतम्। एवमुलूकशब्देनेन्द्रशब्दो लक्ष्यते। तेनेन्द्रजिन्नामेति। यथा वा,

वस्त्रवैदूर्य्यचरणैः क्षतसत्त्वरजःपरा।
निष्कम्पा रचिता नेत्रयुद्धं वेदय साम्प्रतम्॥

अत्राम्बररत्नपादैः क्षततमा अचला कृता नेत्रद्वन्द्वं बोधयेति विवक्षितोऽर्थः। स च वस्त्रादिशब्दानां अम्बरादिशब्दलक्षकतया सम्पादनीयः। पदांशे यथा,

नवकुमुदवनश्रीहासकेलिप्रसङ्गा-
दधिकरुचिरशेषामप्यशेषां जागरित्वा।
अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः
शिशयिषुरिव पाण्डुर्म्लानमात्मानमिन्दुः॥

अत्र हस्तशब्देन करशब्दो लक्ष्यते। तेन च किरणावगतिरिति। एवं गीर्व्वाणशब्दे पदद्वयमपि न परिवृत्तिं सहते। जलध्यादावुत्तरपदं वाड़वानलादौ पूर्व्वपदं च तथा। एवञ्च

मध्ये समुद्रं ककुभः पिशङ्गी-
र्या कुर्व्वती काञ्चनवप्रभासा।
तुरङ्गकान्तामुखहव्यवाह-
ज्वालेव भित्त्वा जलमुल्ललास॥

इति दुष्टम्। चतुर्थः प्रकारः पदे यथा,

अदन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषादरः॥

पूर्व्वमापद्विहन्तृतया दातृत्वमर्थादुक्तमिह तु तद्वैपरीत्येनादातृत्वं वक्तव्यमिति जन्तुपदमत्रादातरि प्रयुक्तं न च तत्तस्य वाचकम्। यथा वा,

हा दिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
तद्विच्छेदरुजाऽन्धकारितमिदं दग्धं दिनं कल्पितम्।
किं कुर्म्मः कुशले सदैव विधुरो धाता न चेत्तत् कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना॥

अत्र तामसीत्यन्धकारमयत्वस्योक्तत्वात्तद्वैपरीत्येन दिनमित्यस्य प्रकाशमयोऽर्थोऽभिप्रेतः, न च तत्तमर्थमभिधत्ते। यथा वा,—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्त्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥

अत्र दधातिर्धारणे शक्तोऽपि विपूर्व्वः करोत्यर्थमेवाभिधत्ते न धारणमिति। वाक्ये यथा,

प्राभ्रभ्राड् विष्णुधामाप्य विषमाश्वः करोत्ययम्।
निद्रां सहस्रपर्णानां पलायनपरायणाम्॥

अत्र शाम्भवशाड्विष्णुधामविषमाख्यनिद्रापर्णशब्दाः प्रकृष्ट-जलदगगनसप्ताख्यसङ्कोचदलानामवाचकाः। यथा वा,

विभजन्ते न ये भूपमालभन्ते न ते श्रियम्।
आवहन्ते न ते दुःखं प्रस्मरन्ति न ये प्रियाम्॥

अत्र विपूर्वोभजतिर्विभागे न सेवने, आङ्पूर्वो लभि-र्विनाशने न प्रापणे, आङ्पूर्वो वहिः करोत्यर्थे न धारणे, प्रपूर्वः स्मरतिर्विस्मरणे न स्मरणे वर्त्तते इति। पदांशे यथा,

चापाचार्य्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठवाधां
वद्धस्पर्द्धस्तव परशुना लज्जते चन्द्रहासः॥

अत्र विजेय इति यतोऽतीतकालवाचकता नास्ति। यथावा

न मानयति संमान्यानालब्धविभवोऽधमः।

अत्रालब्धशब्दस्य प्राप्तार्थकता नास्ति। यद्यपि प्रकृति-प्रत्ययाभ्यां पदनिष्पत्तिस्तथापि प्रकृतेः प्राधान्यात् प्रकृतिगतत्वे पददोषत्वं प्रत्ययगतत्वे तु पदांशदोषत्वमित्यवगन्तव्यम्। इद-मत्रावधेयम्। जन्तुपदस्यादातर्थत्वे नेयार्थैव लक्षणा। दिन पदस्य प्रकाशमयार्थत्वे यद्यपि लक्षणैव शरणं, तथापि प्रकाशाति शयत्वस्य व्यङ्ग्यत्वसम्भवाद्दोषएव नावतरति। एवं विदधदित्यस्य धारणार्थतायां हन्त्यादेर्गमनाद्यर्थतायामन्येष्वप्युदाहरणेषु लक्ष-णाया नेयार्थता न व्याहन्यते। तस्मान्नेयार्थतैवैका सर्वानमून् भेदानभिप्लवते इति। व्युत्पत्तिवैशद्याय त्वमीषां भेदेनोप-दर्शनम्। एवमन्यत्रापि यथासम्भवमनुसन्धेयम्।

अप्रयुक्तनिहतार्थत्वे श्लेषादौ न दोषः ॥ ३५

उदाहरणम् ।

येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो-
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गाञ्च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यञ्च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्व्वदो माधवः ॥

अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थाविति काव्यप्रकाशः ।

सर्व्वोऽप्यनुकरणे ॥३६

अनुकरणे कोऽपि दोषो न भवति । यथा,

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम् ।
पश्यैष च गवित्याह सूत्रामानं यजेति च ॥

अद्राक्षमिति श्रुतिकटु, गो इति च्युतसंस्कृति, सूत्रामानमित्यप्रयुक्तम् ।

व्याहतपुनरुक्तदुष्क्रमसन्दिग्धनिर्हेत्वनवीकृतविशेषाविशेषपरिवृत्तभिन्नसहचरविध्यनुवादायुक्तत्वान्यर्थदोषाः ॥ ३७

तत्र,

पूर्व्वापरविरोधे व्याहतत्वम् ॥ ३८

उदाहरणम् ।

जहि शत्रुबलं कृत्स्नं जय विश्वम्भरामिमाम् ।
तव नैकोऽपि विद्वेष्टा सर्व्वभूतानुकम्पिनः ॥

वक्तृविशेषस्योक्तौ गुणः ॥ ३९

व्याहतत्वमित्येव । उदाहरणम् ।

परदाराभिलाषो मे कथमार्य्यस्य युज्यते ।
पिबामि तरलं तस्याः कदा नु दशनच्छदम् ॥

पूर्वमुक्तस्य पर्य्यायान्तरेणार्थतो वा पुनरभिधानं पुनरुक्तत्वम् ॥ ४०

उदाहरणम् ।

कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥

अत्रार्जुनार्जुनेति संबोध्य भवद्भिरिति चोक्त्वा किरीटिपदार्थः पुनरुक्तः । यथा वा,—

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्व्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्व्वधन्वीश्वराणाम् ।
कर्णालं सम्भ्रमेण व्रज कृप, समरं मुञ्च हार्दिक्य, शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥

अत्र चतुर्थपादार्थः पुनरुक्तः ।

## अनुकम्पादौ न दोषः॥ ४१

पुनरुक्तत्वमित्येव। यथा

अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।

अत्र बालमित्युक्त्वाऽप्राप्तयौवनमिति पुनरुक्तम्।

## क्रमविपर्य्यासे दुष्क्रमत्वम्॥ ४२

उदाहरणम्।

भूपालरत्न, निर्दैन्यप्रदानप्रथितोत्सव।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम्॥

अत्र मातङ्गस्य प्रथमं याचनमुचितम्। एवं, सचापं बाणमादत्ते। वर्णा वैश्यादयो मताः। विंशतिस्तु शताधिका। इत्यादिकमनुसर्त्तव्यम्।

## वक्त्राद्यनिश्चयेनार्थानिश्चयः सन्दिग्धत्वम्॥ ४३

उदाहरणम्।

मात्सर्य्यमुत्साय्य विचार्य्य कार्य्य-
मार्य्याः, समर्य्यादमुदाहरन्तु।
सेव्या नितम्बाः किमु भूधराणा-
मुत स्मरस्मेरविलासिनीनाम्॥

अत्र को वक्तेति यदि न ज्ञायते, तदा भूधराणां विलासिनीनां वा नितम्बाः सेव्या इति कस्तस्याभिमतोऽर्थ इति न निश्चीयते। यदि तु शान्तः शृङ्गारी वा वक्ता निश्चीयते तदा नायं सन्देहः।

## हेत्वनुक्तौ निर्हेतुत्वम् ॥ ४४

यत्र वक्तव्योऽर्थो हेतुमपेक्षते तत्र तस्यानुक्तौ निर्हेतुत्वम् । यत्र तु प्रसिद्धत्वान्न तत्कथनापेक्षा तत्र नायं दोषः । क्रमेणोदाहरणम् ।

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्यासीन्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्-
विमोक्ष्ये शस्त्र, त्वामहमपि यतः स्वस्ति भवते ॥

अत्र द्वितीयशस्त्रमोचने वक्तव्योऽपि हेतुर्नोक्तः ।

चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

अत्र रात्रौ पद्मस्य सङ्कोचः दिवा चन्द्रस्य निष्प्रभत्वं लोकप्रसिद्धमेवेति न वक्तव्यं भवति ।

## विच्छित्तिमन्तरेण पुनरभिधानेऽनवीकृतत्वम् ॥ ४५

पूर्व्वमुक्तोऽर्थः पुनरभिधानीयश्चेत्तथाऽभिधानीयो यथा काचिद्विच्छित्तिरुपसम्पद्यते । तामन्तरेण त्वभिधानेऽनवीकृतत्वम् । उदाहरणम् ।

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां किम् ।

सन्तर्पिताः प्रणयिनो विभवैस्ततः किम्
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥

अत्र, ततः किमित्यनवीकृतम् । ततः किमित्यत्र किंतस्मादिति पदपरिवर्त्तनेऽपि दोषस्य तदवस्थत्वादर्थदोषोऽयम् । नवीकृतत्वं यथा,

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिन्दिवं गन्धवहः प्रयाति ।
बिभर्त्ति शेषः सततं धरित्रीं
षष्ठांशवृत्तेरपि धर्म्म एषः ॥

## विशेषेवक्तव्येऽविशेषस्योक्तौ विशेषाविशेषत्वम् ॥ ४६

उदाहरणम् ।

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मसीकूर्च्चकै-
र्मन्त्वं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥

अत्र ज्योत्स्नीमिति श्यामाविशेषो वाच्यः ।

## तद्विपर्य्ययः परिवृत्तत्वम् ॥ ४७

यत्र सामान्यं वक्तव्यं तत्र विशेषोक्तावयं दोषः । उदाहरणम् ।

कल्लोलवेल्लितदृषत्परुषप्रहारै-
रत्नान्यमूनि मकरालय, माऽवमंस्थाः ।

किं कौस्तुभेन विहितो भवतो न नाम
यञ्चाप्रसारितकरः पुरुषोत्तमोऽपि ॥

अत्र, एकेन किं न विहितो भवतः स नामेति सामान्यमेव वाच्यम् ।

## उत्कृष्टापकृष्टयोरेकत्रोपनिबन्धने भिनसहचरत्वम ॥४८

उदाहरणम् ।

श्रुतेन बुद्धिर्व्यसनेन मूर्खता
मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना
नयेन चालंक्रियते नरेन्द्रता ॥

अत्र श्रुतादय उत्कृष्टाः व्यसनमूर्खते त्वपकृष्टे ।

## विधातुमनुचितस्य विधाने विध्ययुक्तत्वम् ॥ ४९

यद्विधातुमनुचितं तस्य विधाने विध्ययुक्तत्वम् । उदाहरणम् ।

वाताम्बरतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्म्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥

दुरभिसन्धिसिद्ध्यर्थं कपटेनैव सर्व्वेषां धर्म्माचरणं न केऽपि तत्त्वतो धार्म्मिका इति चतुर्थपादतात्पर्य्यम् । तदेव पूर्व्वपादत्रयेण समर्थ्यते । एवञ्चासदभिसन्धिपूर्व्वकधर्म्माचरणमेव तत्र तत्र

दर्शयितुमुचितम् । तथाच जगन्निःशेषयितुं विषधरैर्वीताहारोऽङ्गीकृतः, तान् ग्रसितुं वर्हिभिरभ्रतोयकणिकातीव्रव्रतमाचरितं, तान् क्षयं नेतुं लुब्धकैश्चमूरुचर्म्मवसनं गृहीतमित्येवं रीत्या विधानमत्रोचितम् । यथा वा,

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिना-
मपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥

अत्र, निशां शयितः प्रयत्नेन परिबोध्यसे इति वाच्यम् । न खलु परिबोधितः शेते अपितु शयितः परिबोध्यते ।

## अननुवाद्यस्यानुवादेऽनुवाद्यायुक्तत्वम् ॥ ५०

यथा प्रयत्नपरिबोधित इत्यत्र परिबोधित इति नानुवाद्यम् । यथा वा,

अरे रामाहस्ताभरण, भसलश्रेणिशरण,
स्मरक्रीड़ाव्रीड़ाशमन, विरहिप्राणदमन ।
सरोहंसोत्तंस, प्रचलदल, नीलोत्पल, सखे,
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥

अत्र विरहिण उक्तौ विरहिप्राणदमनेति नानुवाद्यम् । केचित्, सविषयमेऽनियमम् अनियमे सनियमं साकाङ्क्षत्वमपदयुक्तत्वं त्यक्तपुनःस्वीकृतत्वमपुष्टत्वञ्चार्थदोषानाहुः । सनियमेऽनियमो यथा,

यत्रानुल्लिखिताख्यमेव निखिलं निर्म्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पद-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥

छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचितेति सनियमोऽत्र वक्तुमुचितः । तदिदं न्यूनपदत्वमेव दोषः ।

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्य्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते, तेऽम्बुपानाभिलाषः ॥

अत्र शोण एवेति नियमो न वाच्यः । तदिदमधिकपदत्वम् ।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षञ्च परस्य मानयशसोर्विस्रंसनञ्चात्मनः
स्त्रीरत्नञ्च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति । न ह्युपादेयं स्त्रीरत्नं न मृष्यते । तदिदमपि न्यूनपदत्वमेव । अपदयुक्तत्वं यथा-आज्ञाशक्रशिखामणिप्रणयिनीत्यादौ । तदेतदस्थानस्थवाक्यत्वम् । अपुष्टत्वं प्रकृतानुपयोगित्वं व्यर्थविशेषणत्वमिति यावत् । यथा, सदा शिवं नौमि पिणाकपाणिमित्यादौ । तच्चैतदधिकपदत्वं परिकराभावो वा ।

अप्रतीतत्वप्रसिद्धिविरोधाश्लीलत्वानि शब्दार्थयोः ॥ ५१

अप्रतीतत्वं प्रसिद्धिविरोधोऽश्लीलत्वञ्चेति त्रयं शब्देऽर्थे च भवति। तत्र,

शास्त्रमात्रप्रसिद्धावप्रतीतत्वम् ॥ ५२

यत् शास्त्रमात्रप्रसिद्धं तदप्रतीतमित्याख्यायते। तच्चञ्च पदे वाक्ये अर्थे च दोषः। क्रमेणोदाहरणम्।

सम्यक्ज्ञानमहाज्योतिर्दलिताशयताजुषः।
विधीयमानमप्येतन्न भवेत् कर्म्म बन्धनम् ॥

अत्र वासनार्थं आशयशब्दः शास्त्रमात्रप्रसिद्धः।

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः।
दृढ़भूमिः प्रियप्राप्तौ यत्नः स फलितः प्रभोः ॥

अत्राधिमात्रतीव्रसंवेगदृढ़भूमिशब्दा योगशास्त्रमात्रप्रसिद्धाः।

तस्य सांख्यपुरुषेण तुल्यतां
बिभ्रतः स्वयमकुर्व्वतः क्रियाः।
कर्त्तृता तदुपलम्भतोऽभव-
द्वृत्तिभाजि करणे यथर्त्विजि ॥

अत्रार्थः सांख्ययोगशास्त्रमात्रप्रसिद्धः।

द्वयोरभिज्ञत्वे गुणः ॥ ५३

यो वक्ति यं प्रति च वक्ति तौ द्वावपि यद्यभिजानीतस्तदाऽप्रतीतत्वं गुणः। उदाहरणम्।

आत्मारामा विहितरुचयो निर्व्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटितमनोग्रन्थयः सत्वनिष्ठाः।

संवीक्षन्ते कमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम् ॥

यथा वा,

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥

## स्वयशङ्के परामर्शे ॥ ५४

अप्रतीतत्वं गुण इत्येव । यथा मम कौमुदीसुधाकरे कङ्कालमालिनी ।

बलमिति खलु पार्श्वं यां वदन्ति प्रवीणाः
परमपुरुषतत्त्वं या तिरोधत्त एव ।
पशुकुलमनुगृह्य प्राज्यरूपा शिवा नो-
वितरतु शिवमेषा रोधशक्तिः शिवस्य ॥

## प्रसिद्धिविपर्य्यासे प्रसिद्धिविरोधः ॥ ५५

प्रसिद्धिश्च लोके शास्त्रे कविसमये चेत्यनेधा भिद्यते । स खल्वयं प्रायेणार्थगतः, कविसमयप्रसिद्धिविरोधस्तु शब्दगतोऽपी-त्यनुचिन्तनीयम् । उदाहरणम् ।

इदन्ते केनोक्तं कथय कमलातङ्कवदने,
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु मतिम् ।
इदन्तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥

अत्र कन्दर्पस्य चक्रं लोके न प्रसिद्धम् । देशादिविरोधोऽपि लोकविरोध एव । दिङ्मात्रमुदाह्रियते ।

कर्पूरपादपामर्शसुरभिर्मलयानिलः ।
कलिङ्गवनसम्भूता मृगप्राया मतङ्गजाः ॥

मलये कर्पूरपादपाः कलिङ्गवने मतङ्गजाश्च न भवन्ति । शास्त्रविरोधस्योदाहरणम् ।

अनाहिताग्नयोऽप्येते जातपुत्रा वितन्वते ।
विप्रा वैश्वानरीमिष्टिमक्लिष्टाचारभूषणाः ॥

अत्रानाहिताग्नीनां वैश्वानरीष्टिर्वेदशास्त्रेण विरुध्यते ।

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥

रात्रौ सदा स्नानं धर्म्मशास्त्रेण । तत्र ह्युपरागादौ रात्रौ स्नानमुक्तं नान्यत्र ।

अनन्यसदृशं यस्य बलं वाह्वोः समीक्ष्यते ।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना ॥

एतदर्थशास्त्रेण ।

मृगीदृशः पल्लवरागकोमले-
विभाति दन्तक्षतमुत्तराधरे ।

एतत् कामशास्त्रेण ।

अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाधसिद्धिसविधं विदधद्विदूरे ।
आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥

एतत् योगशास्त्रेण। आदौ विवेकख्यातिस्ततः सम्प्रज्ञातः समाधिस्ततोऽसंप्रज्ञातसमाधिस्ततोमुक्तिरिति हि योगशास्त्रे व्युत्पादितम्।

यावज्जीवमहं मौनी ब्रह्मचारी पिता मम।
माता च मम वन्ध्याऽऽसीदपुत्रश्च पितामहः॥

एतत् न्यायशास्त्रेण। यथा वा,

अभ्युपेत्य स्वपक्षेऽसौ परोक्ताविततदूषणम्।
तत्पक्षमपि तेनैव प्रत्याचष्टे विचक्षणः॥

एवं शास्त्रान्तरविरोधेऽप्युदाहर्त्तव्यम्।

उपपरिसरं गोदावर्य्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरिहेष्यताम्।
इह हि विहितो रक्ताशोकः कयाऽपि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चकः॥

एतत् कविसमयेन। पादन्यासात् खल्वशोकेषु पुष्पोद्गमः कविसमयप्रसिद्धो न त्वङ्कुरोद्गम इति। यथा वा,

सरोजिनीकुमुद्वत्यौ निरीक्षेते परस्परम्।
कियत्यपि तमो हन्ति कृष्णपक्षेऽपि कौमुदी॥

रात्रौ सरोजिन्या दिवा कुमुद्वत्याश्च विकासः कृष्णपक्षे कौमुदी च कविसमयेन विरुध्यते। शब्दे यथा,

महाप्रलयमारुतक्षुभितपुष्करावर्त्तक-
प्रचण्डघनगर्ज्जितप्रतिरवानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्व्वः पुरः॥

अत्र रवो मण्डूकादिषु प्रसिद्धो नतून्नतरूपे सिंहनादे। अत्र रवशब्दान्वयव्यतिरेकानुविधायित्वादाजघ्ने इतिवद्दोषस्य पद-गतत्वमवसेयम्। वाक्ये यथा,

रवो वारिमुचां घोरो भेरीणामारवस्तथा।
पटहानां ध्वनिः कर्णौ पीड़यन्ति समन्ततः॥

आरवः पटहानां प्रसिद्धो न भेरीणां, एवं ध्वनिर्मृदङ्गादीनां न पटहानाम्।

दशाविशेषे गुणः॥ ५६

प्रसिद्धिविरोध इत्येव। उदाहरणम्।

असूत सद्यः कुसुमान्यशोकः
स्कन्धात् प्रभृत्येव सपल्लवानि।
पादेन नापैक्षत सुन्दरीणां
सम्पर्कमाशिञ्जित नूपुरेण॥

अत्राकस्मादेव सर्वात्मना वसन्तस्य प्रवृत्तेरत्यन्तचित्तोन्माद-कत्वं कालस्यावगम्यते।

व्रीड़ाजुगुप्साऽमङ्गलव्यञ्जकत्वमश्लीलत्वम्॥ ५७

पदे यथा,

साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भुवम्॥
प्रासादानामुपरि वलभीजालवातायनेषु
श्रान्त्याद्वृत्तः परिणतसुरागन्धसम्भारगर्भः।

माल्यामोदी मुहुरुपचितस्फारकर्पूरवासो
वायुर्यूनामभिमतवधूसन्निधानं व्यनक्ति॥
मृदुपवनविभिन्नो मत्प्रियाया विनाशात्
घनरुचिरकलापो निःसपत्नोऽस्य जातः।
रतिविगलितवन्धे केशपाशे सुकेश्याः
ति कुसुमसनाथे कं हरेदेष वर्हः॥

अत्र साधनवायुविनाशशब्दाः क्रमेण व्रीड़ाजुगुप्साऽमङ्गल-व्यञ्जकाः। वाक्ये यथा

नृपतेरुपसर्पन्ती कम्पना वामलोचना।
तत्तत्प्रहरणोत्साहवती मोहनमादधौ॥
तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्त्तनम्॥

पितृवसतिमहं व्रजामि तां
सह परिवारजनेन यत्र मे।
भवति सपदि पावकान्वये
हृदयमशेषितशोकशल्यकम्॥

अत्रोपसर्पन्तीप्रहरणमोहनशब्दाः वान्तोत्सर्गप्रवर्त्तनशब्दाः पितृवसतिपावकान्वयाशेषितशोकशल्यशब्दाश्च क्रमेण व्रीड़ा-जुगुप्साऽमङ्गलवाचकाः। पदांशे यथा

मनीषिताः सन्ति गृहेषु देवता-
स्तपः क्क वत्से क्क च तावकं वपुः।

पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्त्रिणः ॥

पेलेति व्रीड़ाव्यञ्जकम् ।

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्ज्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥

पूयेति जुगुप्साव्यञ्जकम् ।

विनयप्रणयैककेतनं
सततं योऽभवदङ्ग, तादृशः ।
कथमद्य स तद्वदीक्ष्यतां
तदभिप्रेतपदं समागतः ॥

प्रेतेत्यमङ्गलव्यञ्जकम् । अर्थे यथा

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाऽऽशु जायते पातो न तथा पुनरुन्नतिः ॥

अत्रार्थो व्रीड़ाव्यञ्जकः । अन्ययोरूह्यमुदाहरणम् ॥

शान्तोक्त्यादौ गुणः ॥ ५७

अश्लीलत्वमित्येव । शान्तोक्तौ यथा,

उत्तानोच्छूनमण्डूक पाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरक्रमेः कस्य जायते ॥

एवं विदूषकोक्तौ बोध्यम् । कामिन उक्तौ यथा,

करिहस्तेन संबाधे प्रविश्यान्तर्विलोड़िते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥

सुरतारम्भगोष्ठ्यां खल्वियमुक्तिः ।

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्व्वहणं भविष्यति कथं मानस्य तस्मिन् जने ॥

अत्र दग्धशब्दोऽमङ्गलव्यञ्जकोऽपि सोत्लुण्ठोक्तौ गुणः । एवमन्यदप्यूहनीयम् । अविदग्धजनोचितत्वलक्षणं ग्राम्यत्वमपि शब्दार्थयोर्दोषमिच्छन्ति । तत्रोदाहरणम् । पदे यथा,

राकाविभावरीकान्त-संक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥

अत्र कटिशब्दः । कवयो हि श्रोणिनितम्बादिशब्दानेव प्रयुञ्जते । वाक्ये यथा,

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥

अत्र गल्लादयः शब्दाः । अर्थे खल्वपि ।

स्वपिति यावदयं निकटे जनः
स्वपिमि तावदहं किमपैति ते ।
तदपि साम्प्रतमाहर कूर्परं
त्वरितमूरुमुदञ्चय कुञ्चितम् ॥

अधमप्रकृत्युक्तौ तु नायं दोषः । यथा विदूषकस्योक्तौ,

फुल्लुक्करं कलमकूरसमं वहन्ति

ये सिन्धुवारविडवा मह्न वल्लहा दे ।
ये गालिदस्स महिसीदहिणो सरिच्छा-
दे किं च मुद्धविअइल्लपसूणपुञ्जा (१) ॥

अत्र, कलमकूरमहिसीदहिशब्दा ग्राम्याः । तत्र शब्दगतं ग्राम्यत्वमप्रयुक्तत्वान्नातिरिच्यते । अर्थगतञ्च पर्य्यायोक्तालङ्काराभावमात्रम् । न खल्वलङ्काराभावो दोषः ।

रसस्थायिभावव्यभिचारिभावानां स्वशब्दनिर्द्देशः प्रतिकूलविभावादिग्रहः पुनः पुनर्दीप्तिरकाण्डे प्रथनविच्छेदावङ्गस्यातिविस्तृतिरनङ्गस्याभिधानमङ्गिनोऽननुसन्धानं प्रकृतिविपर्य्ययश्चेति रसदोषाः ॥ ५८ ॥

क्रमेणोदाहरणम् ।

अजायत रसः कोऽपि भूपतेः सङ्गरान्तरे ।
परस्यानीकिनीं वीक्ष्य मुहुर्वीररसोज्ज्वलाम् ॥

अत्र रसस्य स्वशब्दनिर्द्देशः ।

संप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥

---

(१) पुष्पोत्करं कलमभक्तनिभं वहन्ति
ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षा-
स्ते किञ्च मुग्धविचकिलप्रसूनपुञ्जाः ॥ इति सं० ।

अत्रौत्सुक्यस्य ।

सव्रीड़ा दयितानने सकरुणा मातङ्गचर्म्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्व्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

अत्र व्यभिचारिभावस्य । व्यानम्रा दयितानने मुकुलिता मातङ्गचर्म्माम्बरे, सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि । मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे इत्यनुभावमुखेनामीषां प्रतिपादनन्तु न्याय्यम् । यत्र त्वनुभावमुखेन द्रागित्येव न प्रतीयते तत्र स्वशब्देनोक्तावपि न दोषः । यथा,

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किञ्चाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे वाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥

अत्र व्रीडाद्यनुभावानां विवलितत्वादीनामिवौत्सुक्यानुभावस्य त्वरादेरसाधारणत्वाभावादुत्सुकमित्युक्तम् । प्रतिकूलविभावादिग्रहो यथा,

प्रसादे वर्त्तस्व प्रकटय मुदं सन्त्यज रुषं
प्रिये, शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निदानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे, प्रत्येतुं प्रभवति गतः कालहरिणः ॥

यथा वा,

त्यजत मानमलं बत विग्रहै-
र्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते
स्मरमते रमते स्म वधूजनः ॥

अत्रानित्यताप्रकाशनं शृङ्गारप्रतिकूलस्य शान्तस्य विभावः । यथा वा,

निभृतरमणे लोचनपथं पतिते गुरुजनमध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥

अत्र सकलपरिहारवनगमने शान्तानुभावौ । प्रतिकूलविभावादीनामपि प्रकृतरसस्याङ्गभावोपपत्तौ त्वदोषः । यथाऽत्रैव इन्धनाद्यानयनव्याजेन सम्भोगार्थं वनगमनवर्णने दोषो न भवति । एवं विरुद्धयोरप्यङ्गाङ्गिभावे साम्ये वा विवक्षिते रसयोरविरोधो-बोद्धव्यः । यथा ।

अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र स्मर्य्यमाणः शृङ्गारः करुणमेव पुष्णाति ।

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोऽंशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

अत्र शराग्निविषयः कवेरतिभावस्त्रिपुरयुवतीनां करुणेन कामीवेति साम्यबलायातशृङ्गारपरिपुष्टेन प्रगुणीक्रियते। यथा खल्वार्द्रापराधः कामी समाचरति तथा शराग्निरिति साम्यं स्पष्टमेव। पुनःपुनर्दीप्तिर्यथा कुमारसम्भवे रतिविलापे। अकाण्डे प्रथनं यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरसंक्षये काले दुर्य्योधनस्य भानुमत्या सह शृङ्गारावतारणम्। अकाण्डे विच्छेदो-यथा, वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोः संग्रामे देव्याः कङ्कणमोचनाय गच्छामीत्युक्त्वा राघवस्यान्तःपुरगमनम्। अङ्गस्यातिविस्तृतिर्यथा हयग्रीववधेऽप्रधानस्य हयग्रीवस्यातिविस्तरेण वर्णनम्। यथा वा किरातार्ज्जुनीये सुराङ्गनाविहारादेः। अनङ्गस्याभिधानं यथा कर्पूरमञ्जर्य्यामात्मना नायिकया च कृतं वसन्तवर्णनमनादृत्य वन्दिकृतस्य तस्य राज्ञा प्रशंसनम्। तद्धि न प्रकृतस्य रसस्योपकरोति। अङ्गिनोऽननुसन्धानं यथा, रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्याऽऽगमने सागरिकाया विस्मरणम्। प्रकृतयो-नायकादयः, तेषां विपर्य्ययोऽन्यथावर्णनम्। यो यथाभूतो-भवितुमुचितस्तस्यायथावर्णनमिति यावत्। यथा धीरोदात्तस्य रामस्य च्छद्मना वालिवधवर्णनमित्येवमादिकमनुसन्धेयम्।

## अनौचित्यं सर्व्वत्र ॥ ५८

अनौचित्यं नाम दोषः सर्व्वत्र शब्देऽर्थे रसे च भवति। क्रमेणोदाहरणम्।

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्त्रिभिरिष्यते च या।

प्रयान्ति तामाशु गतिं यशस्विनो-
रणाश्वमेधे पशुतामुपागताः ॥

अत्र पशुशब्दः कातरतामभिव्यनक्तीत्यनुचितस्तदुपनिबन्धनम् ।

राज्यं नाम नरेन्द्राणामापदां पदमुत्तमम् ।
तदमित्राय दत्त्वा तद्विपदा भव निर्वृतः ॥

अमित्रस्य सम्पदा तप्यमानं तेनोपद्रुतं च राजानं प्रत्यनु मेवेदमुपदिष्टम् ।

मानापनोदाय पदारविन्दे
नतः प्रियायाः प्रणयी तया तु ।
पादप्रहारेण तिरस्कृतोऽभू-
दालोहिताक्षोगत एव वेगात् ॥

अत्र नायिकापादप्रहारेण नायककोपवर्णनमनुचितम् । एवमन्यदप्यूहनीयम् । अनौचित्यन्त्वेक एव दोषः सर्व्वानपरानभिव्याप्नोति । न खलु प्रतिकूलवर्णादयः केऽपि भवन्त्युचिताः । तस्मादनौचित्यस्यैवोदाहरणप्रपञ्चेनोपन्यासार्थमन्येषां परिकीर्त्तनमिति युक्तमुत्पश्यामः । ध्वनिकृद्भिरप्युक्तम् ।

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥

इति ।

## एतेनालङ्कारदोषा व्याख्याताः ॥ ६०

अलङ्कारदोषा अप्येतेनैव व्याख्याता वेदितव्याः न त्विति पृथ-

गुपनिबद्धव्या भवन्ति। तथाहि। वैफल्यं वृत्तिविरोधः प्रसिद्ध्य-भावश्चेति त्रयोऽनुप्रासदोषाः प्राच्यानामनुमताः।

क्रमेणोदाहरणम्।

> ग्रस्ताङ्कग्रस्तशुभ्रांशुर्भस्मभूषितविग्रहः।
> जामाता गिरिराजस्य जगद्रक्षतु धूर्जटिः॥

तदिदमधिकपदत्वं परिकराभावो वा।

> अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम्।
> कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर॥

तदिदं प्रतिकूलवर्णत्वम्।

> चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्ज्जटिर्धूर्ध्वजान्ता-
> नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः।
> रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
> स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः॥

अत्र कर्त्तृकर्म्मप्रतिनियमेन स्तुतिर्न खल्वपि पुराणादौ प्रसिद्धा, किन्त्वनुप्रासानुरोधेनैव कृतेति प्रसिद्ध्यभावः। सोऽयं प्रसिद्धि-विरोधेऽन्तर्भवतीति केचित्। अविचारिताभिधानमेतदिति प्रति-भाति। अभावविरोधयोरर्थान्तरत्वात्। एवं रीत्या विरोधे त्वभि-धीयमाने किल कविकल्पना दत्ततिलाञ्जलिरापद्येत। अनौचित्यन्तु स्यात्। स एव तु दोषः सर्व्वव्यापी। व्युत्पत्त्यर्थन्तु क्वचित् कस्यचित् प्रदर्शनमनुचिन्तनीयम्। पादत्रयगतत्वं यमकदोषः। स त्वप्रयुक्तत्वान्नातिरिच्यते। उपमानस्य जातिप्रमाणगतं धर्म्मगतञ्च

न्यूनत्वमधिकत्वं वा उपमानोपमेययोर्लिङ्गवचनभेदः कालपुरुषविध्यादिभेदोऽसादृश्यमसम्भवश्चेत्युपमादोषाः परेषामनुमताः । यदाहुः ।

हीनाधिकत्वं वचन-लिङ्ग-भेदो विपर्य्ययः ।
असादृश्यासम्भवौ च दोषाः सप्तोपमागताः ॥

विपर्य्ययः कालपुरुषविध्यादिभेदः ।

क्रमेणोदाहरणम् ।

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ।

अत्रोपमानस्य जातिगतं न्यूनत्वमुपमेयस्य निन्दां व्यञ्जयदनौचित्ये पर्य्यवस्यति ।

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ।

अत्राप्युपमेयस्य परिमाणगतं न्यूनत्वमुपमेयं कदर्थयतीत्यनौचित्यमेव दोषः ।

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः ॥

अत्रोपमानस्य जातिगतमाधिक्यम् । तदिदमनौचित्यम् ।

पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥

अत्रोपमानस्य प्रमाणगतमाधिक्यम् । दोषस्त्वनौचित्यमेव ।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूत-भागाश्लिष्ट इवांशुमान् ॥

अत्र शौक्ल्यौज्ज्वल्यानीयस्तडिल्लतालक्षणो धर्म्म उपमानस्य वक्तव्योऽपि नोक्त इति न्यूनपदत्वम्।

स पीतवासाः प्रगृहीतशार्ङ्गो-
मनोज्ञभीमं वपुराप कृष्णः।
शतह्रदेन्द्रायुधवान् निशायां
संसृज्यमानः शशिनेव मेघः॥

अत्रोपमेये शङ्खस्यानिर्देशात् उपमानस्य शशिरूपो धर्म्मोऽधिको निर्दिष्टः। तदिदमधिकपदत्वम्।

चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे।

अत्र च्युतोऽसीति न खल्वप्युपमाने चिन्तारत्नेऽन्वेतुमर्हति। तदिदं भग्नप्रक्रमत्वम्।

शक्तावो भक्षिताः कामं शुद्धाः कुलवधूरिव।

स एवात्रापि दोषः। यत्र पुनर्लिङ्गवचनभेदेऽपि सामान्यस्योभयत्रान्वयो न व्याहन्यते, तत्र तु दोषो न भवत्येव। तत्रोदाहरणम्।

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः।

एवं,

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव॥

अत्र मधुरताभृत इति दधते स्म इति चैकवचनबहुवचनयोः समानरूपत्वान्नास्ति दोषस्यावसरः। भोजराजादयस्तु पर्य्यायान्तराभावे लिङ्गवचनभेदयोर्न दोषत्वमित्याहुः। उदाहरन्ति च।

यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥

अत्र भस्त्रायास्तथाविधं पर्य्यायान्तरं नास्तीति । आचार्य्यास्तु,

न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ।
स्त्रीव गच्छति षण्ढोऽयं वक्त्येषा स्त्री पुमानिव ।
प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता ।
भवानिव महीपाल, देवराजो विराजते ।
अलमंशुमतः कक्षामारोढुं तेजसा नृपः ॥

इत्येवमादौ सौभाग्यं न जहात्येव जातुचित् । इत्याहुः ।

कालभेदो यथा ।

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमाद् यामिनीयामात् प्रसादमिव चेतना ॥

अत्र चेतना अधुनाऽपि प्रसादमाप्नोति, न त्वापेत्यनेन संबन्धुमर्हतीत्यनौचित्यम् ।

प्रत्यग्रमज्जनविशेषविविक्तमूर्त्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्च्चयन्ती
बालप्रबालविटपप्रभवा लतेव ॥

अत्र लता विभ्राजते, त्वन्तु विभ्राजसे इति पुरुषभेदः । स त्वनुचितः ।

गङ्गेव प्रवहतु ते सदैव कीर्त्तिः।

अत्र गङ्गाप्रवहत्येव नतु प्रवहत्वित्यनेन तदाशंसनीयमिति विधिभेदः।

ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्।

अत्र काव्यस्य शशिना, अर्थानां च रश्मिभिर्न खल्वपि सादृश्यमस्तीत्यसादृश्यम्। सर्व्वमेवैतदनुचितम्। असम्भवः खल्वपि।

निपेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः।
जाज्वल्यमाना इव वारिधारा-
दिनार्द्धभाजः परिवेषिणोऽर्कात्॥

अत्र भृशं ज्वलन्त्यो वारिधाराः सूर्य्यमण्डलान्न खल्वपि निपतन्तीत्यसम्भवः। सोऽयं प्रसिद्धिविरोधः। यथाशब्दस्योत्प्रेक्षाप्रतिपिपादयिषया प्रयोग उत्प्रेक्षायां दोषः। यथा।

उद्ययौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम्।
नारीलोचनचातुर्य्य-शङ्कासङ्कुचितं यथा॥

तदिदमवाचकत्वम्। उत्प्रेक्षितार्थसमर्थनमर्थान्तरन्यासे दोषः। यथा।

दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैःशिरसां सतीव॥

सम्भाव्यमानानुपपत्तिनिराकरणार्थं खल्वर्थान्तरं न्यस्यते। उत्प्रेक्षितस्य त्वर्थस्य न काचिदनुपपत्तिरवतरतीति व्यर्थमेव तत्समर्थनम्। साधारणविशेषणबलादेवोपमानप्रतीतौ सत्यां शब्देन तदुपादानं समासोक्तौ दोषः। यथा,

स्पृशति तिग्मरुचौ ककुभः करै-
र्दयितयेव विजृम्भिततापया।
अतनुमानपरिग्रहया स्थितं
रुचिरया चिरयाऽपि दिनश्रिया॥

अत्र दयितयेति न पुनर्वक्तव्यं भवति। यथा वा,

अनुरागवन्तमपि लोचनयो-
र्दधतं वपुः सुखमतापकरम्।
निरकासयद्रविमपेतवसुं
वियदालयादपरदिग्गणिका॥

अत्रापरदिगित्येतावतैव समाप्यम्। अनयैव रीत्याऽप्रस्तुतप्रशंसायामुपमेयोपादानं दोषः। यथा।

आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्य्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम्।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम्॥

अत्राचेतसः प्रभोरुपादानमनुचितमेव। एवं समासोक्तौ

नपुंसकलिङ्गावबोधितेऽर्थे नायकव्यवहारसमारोपः। इत्येवमादयोऽन्येऽप्यलङ्कारदोषाः न खल्वप्यतिरिच्यन्ते इति धीमद्भिरवधेयम् ।

ग्रन्थग्रन्थिविहीना कृतिरेषा चन्द्रकान्तस्य ।
परिहास्याऽप्यपरेषां परगुणलेशैषिणां मुदे भविता ॥
नगरं सेरपुराख्यं कैकयविषये यदस्ति विख्यातम् ।
तद्वास्तव्यस्यैषा कृतिरुपकृतयेऽस्तु बालानाम् ॥
अन्ध इव स्फुटदोषे गुणेषु विरलेषु वैनतेय इव ।
एवं शीलाः सन्तो भवन्ति वसुधातले नमस्तस्मै ॥

इत्यलङ्कारसूत्रे दोषपरिच्छेदः ।

समाप्तश्चायं ग्रन्थः ।

---